# एतस्मिन् चित्रे सङ्गीतसाधनं किम् अन्वेष्टुं शक्यम् ?

यदि अन्वेष्टुं न शक्तं तर्हि चित्रे दक्षिणभागे स्थितां प्रथमां सोपानपङ्क्तिं पश्यन्तु । अत्रत्यानि सोपानानि ताडनात् विविधान् सङ्गीतस्वरान् उत्पादयन्ति । केन उद्देशेन एतानि अत्र निर्मितानि इति तु कोऽपि न जानाति । किन्तु एतानि प्राचीनानां तन्त्रज्ञानप्रावीण्यं द्योतयन्ति इत्यत्र तु नास्ति सन्देहः । एतत् कौतुकं प्रत्यक्षं द्रष्टुं तमिलनाडुस्थं तापूरुजनपदस्थं 'धरासुर'मन्दिरम् आगच्छन्तु ।

न दृष्टानि
प्राचीनानि
कौतुकानि
एतावतापि ?

# ओलम्पिक् प्रश्न स्पर्धा

विशेषपारितोषिकम्



'एसर्' सङ्गणकम्

प्रथमपारितोषिकाणि



चित्रग्राहकाणि

द्वितीयपारितोषिकाणि



गणकयन्त्राणि

न्यूट्रिन्चन्दमामा-ओलम्पिक्-प्रश्नस्पर्धा मेमासतः आरब्धा, षट् मासान् यावत् प्रचलिष्यति च । अधः दत्ताः क्रीडासम्बद्धाः प्रश्नाः भवतां ज्ञानम् अभिरुचिं च वर्धयिष्यन्ति । अधः स्थिते प्रश्नपत्रे समुचितानि उत्तराणि विलिख्य पञ्चभिः 'न्यूट्रिन् चोकलेट् एक्लियर्स्'-आवरणैः सह अन्तिमदिनाङ्कात् पूर्वं **Nutrine Chandamama Contest, Chandamama India Limited No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097** इत्येतस्मै सङ्केताय प्रेष्यन्ताम् ।

एषा अखिलभारतीयस्पर्धा । प्रतिमासम् एतस्मिन् पत्रे उत्तरं लिखित्वा प्रेषणेन स्पर्धायां भागः उह्यताम् । प्रतिमासं प्रथमपारितोषिकाणि - ३ कोनिकाचित्रग्राहकाणि । द्वितीयपारितोषिकाणि - १० गणकयन्त्राणि । तृतीयपारितोषिकाणि - ५० न्यूट्रिन्मधुरपुटकाः । पञ्चानां मासानाम् अनन्तरं षष्ठस्पर्धायां विशेषपारितोषिकत्वेन 'एसर्'सङ्गणकं दास्यते । तस्मिन् मासे अन्यानि सामान्यपारितोषिकाणि अपि भवन्ति एव । षट्सु मासेषु स्पर्धायां भागम् ऊढवन्तः सर्वे विशेषपारितोषिकप्राप्तये अर्हाः । विशेषपारितोषिकं प्राप्तवते डिसेम्बर्मासे सूचना प्रेषयिष्यते ।

## न्यूट्रिन्चन्दमामा-ओलम्पिक् प्रश्न स्पर्धा - ४

**किं भवन्तः जानन्ति ?**



ओलम्पिक्स्पर्धासु सुवर्णपदकं प्राप्तवती प्रथमा महिला ग्रेट्ब्रिटन्देशीया चार्लेट् कूपर्नामिका । सा १९०० तमे वर्षे पैरिस्नगर्यायाम् ओलम्पिक्स्पर्धायां टेन्नीस्क्रीडायां तत् पदकं प्राप्तवती ।

सावधानतया अधः दत्तान् सर्वान् प्रश्नान् पठित्वा प्रतिप्रश्नम् उत्तरलेखनाय कल्पिते स्थले समुचितस्य उत्तरस्य पुरतः (✔) चिह्नम् अङ्कयन्तु ।

१. ओलम्पिक्स्पर्धासु भागं गृहीतवती प्रथमा महिला का ?

☐ पि.टि.उषा ☐ अञ्जु जार्ज् ☐ मेरी लीला राव्

२. १९३६ तमे वर्षे बर्लिन्नगरे प्रवृत्तायाम् ओलम्पिक्स्पर्धायां कः अमेरिकीयः चत्वारि सुवर्णपदकानि प्राप्तवान् ?

☐ टान् डोलान् ☐ मैकेल् जान्सन् ☐ जेस्सी ओवेन्स्

३. ओलम्पिक्स्पर्धासु पुरुषविभागे ऊर्ध्वकूर्दने अतिक्रान्तम् अधिकम् औन्नत्यं किम् ?

☐ २.३ मी. ☐ २.३९ मी. ☐ २.१ मी.

४. १९८८ तमे वर्षे प्रवृत्तायां सियोलीयायाम् ओलम्पिक्स्पर्धायां शतमीटर्धावनस्पर्धायाम् अमेरिकीया का स्वर्णपदकं प्राप्तवती ?

☐ फ्लारेन्स् ग्रिफिथ् ☐ जाकी जोय्नर् कर्सी ☐ पौला इवान्

५. एतस्य मासस्य न्यूट्रिन्विज्ञापिकायां 'A' इत्येतत् अक्षरं कतिवारम् आवृत्तम् अस्ति ?

☐ १३ ☐ १६ ☐ १२

**स्पर्धानियमाः** - ● न्यूट्रिन्-चन्दमामासंस्थयोः उद्योगिनः तेषां बान्धवाः वा स्पर्धायां भागवहनाय अनर्हाः । ● न्यूट्रिन्संस्था निर्णायकानां चयने पूर्णाधिकारम् अर्हति । ● भारते जाताः उनपञ्चदशवर्षीयाः बालाः स्पर्धायां भागं वोढुम् अर्हाः । ● स्पर्धादिनाङ्कस्य विस्तारे सङ्कोचे च न्यूट्रिन्जनानाम् एव अन्तिमः अधिकारः । ● भागग्राहिणः वयसः दृढीकरणाय जन्मदिनाङ्कप्रमाणपत्रं देयम् । ● समुचितोत्तरदातारः बहवः सन्ति चेत् 'लाटरी'पद्धत्या पारितोषिकार्हाणां चयनं करिष्यते । ● पारितोषिकभाजः पत्रेण सूच्यन्ते । ● पारितोषिकं वस्तुरूपेणैव, न तु धनरूपेण । ● पारितोषिकरूपेण दत्तानां वस्तूनां 'वारण्टी' निर्मातृसंस्थाधीनम् । ● एकः एव प्रतिमासम् अपि भागं ग्रहीतुम् अर्हति । ● षट्सु मासेषु कस्मिंश्चित् एकस्मिन् एव भागग्रहणम् अपि शक्यते । ● पत्रव्यवहारस्य न अवकाशः । ● स्पर्धापत्रं प्रेषितम् इत्यस्य तात्पर्यं यत् स्पर्धानियमाः सर्वे अङ्गीकृताः इति । ● अन्तिमदिनाङ्कानन्तरं प्राप्तं प्रवेशपत्रं स्पर्धायै न परिगण्यते । ● समुचितम् उत्तरं केनापि न दत्तं चेत् अल्पदोषयुक्तानि पत्राणि पारितोषिकाय परिगण्यन्ते । ● निर्णायकानां निर्णयः एव अन्तिमः ।

**अन्तिमः दिनाङ्कः - ३१, अगस्ट् - २००४**



नाम ..............................................

वयः .................. कक्ष्या .................. जन्मदिनाङ्कः ..............

गृहसङ्केतः (पिन्कोड्सहितः) ..............................................

..............................................

हस्ताक्षरम् ..............................................














India's largest selling sweets and toffees.

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - २१ अगस्ट् - २००४ सञ्चिका - ५



भल्लूकमान्त्रिकः

१२



सौन्दर्यम् (वेतालकथा)

१९



राजकुमारीं स्पृष्टवान् दलपतिः

५१



विष्णुपुराणम् - ८

५७

## अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org

**ग्राहकशुल्कविवरणम्**
वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



संस्थापकौ -
चक्रपाणिः नागिरेड्डिः च

# चन्दमामा पर्वतीयजनानां भाषया अपि !

वयं ससन्तोषं निवेदयामः यत् भवतां प्रिया *चन्दमामा* अचिरात् एव पर्वतीयजनानां भाषया, तन्नाम सन्थालीभाषया, अपि प्रकाशयिष्यते । चन्दमामा एतावता एव द्वादशभिः भाषाभिः प्रकाश्यमाना अस्ति इति भवन्तः जानीयुः एव ।

एषा सन्थाली-आवृत्तिः ओल्चिकीलिप्या प्रकाशयिष्यते **'चन्दोमामो'** *नाम्ना* । एषा लिपिः गुरु गोम्खे पण्डित रघुनाथमुर्मुवर्येण विकासिता । तस्य जन्मशताब्दः एतस्य वर्षस्य मेमासे आचरितः । सप्टम्बर्मासे एतस्याः आवृत्तेः प्रथमा सञ्चिका प्रकाशयिष्यते । तस्मात् 'सिन्थालीभाषया प्रकाश्यमाना अद्वितीया बालमासपत्रिका' इति ख्यातिः प्राप्स्यते चन्दमामया । सिन्थालीभाषाभाषिणः प्रायः कोटिमिताः स्युः देशे । ते उत्कल- पश्चिमवङ्ग-झारखण्ड-बिहारासमनामकेषु पञ्चसु राज्येषु वसन्ति ।

५७ वर्षेभ्यः पूर्वं चन्दमामा तमिळुभाषया तेलुगुभाषया च ऐदम्प्राथम्येन प्रकाशिता । तदनन्तरम् अन्यभाषाभाषिणाम् अनुरोधेन अन्यभाषाभिः अपि तस्याः प्रकाशनम् आरब्धम् । संस्थापकौ बि.नागिरेड्डिः चक्रपाणिः च दूरदृष्टिमन्तौ आस्ताम् । एषा पत्रिका भारतीयपरम्परायाः, बालानां च मध्ये सम्पर्कसाधकः सेतुः स्यात् इति तयोः चिन्तनम् आसीत् । अद्य सिन्थालीभाषावृत्तिं प्रकाशयन्तः प्रकाशकाः वयम् एतेन प्रकाशनेन तयोः स्वप्नस्य साकारतार्थं पुनरपि एकं पदम् अग्रे स्थापितवन्तः स्मः ।

यद्यपि विविधाभिः भाषाभिः चन्दमामा प्रकाश्यते, तथापि सर्वासाम् अपि आवृत्तीनाम् उद्देशः तु एकः एव - स्वभाषया प्रकाश्यमानं पठनसाहित्यम् आवश्यकम् इत्येषा जनानाम् अपेक्षा पूरणीया इति ।

*सम्पादकः* - **विश्वम्**





याचकानां कृते कथास्पर्धा (मार्च्)

# चिता श्रेष्ठा कथापूर्तिः



तयोः एतत् विचित्रं सम्भाषणं श्रुतवतां यात्रिकाणाम् अवधानं तयोः दिशि गतम् । एकस्मिन् एव भवने वसतोः अपि परस्परपरिचयः नास्ति इत्येतत् तेषु आश्चर्यम् अजनयत् । 'किम् एतयोः गृहे अन्यः कुटुम्बः वसति ? यदि वसति तर्हि अपि परस्परं परिचयाभावः कथं घटते ?' इति अचिन्तयन् ते ।

तावता तयोः अन्यतरः अपरम् अपृच्छत् – ''भवतः गृहे के के सन्ति ? तेषां नामानि च कानि ?'' इति ।

तदा अपरः अवदत् – ''मम नाम राजकुमारः इति । भ्राता शिवकुमारः, पिता दीननाथः च मम गृहे स्तः'' इति ।

''हे भगवन् ! किम् एतत् आश्चर्यम् ! मम गृहे भ्राता राजकुमारः, पिता दीननाथः च निवसतः । अहमस्मि शिवकुमारः' इति अवदत् अन्यः ।

तयोः एतत् सम्भाषणं श्रुत्वा आश्चर्यं निरोद्धुम् अशक्नुवन् यात्रिषु कश्चित् अपृच्छत् – ''एवं बहुषु विषयेषु समानतायां सत्याम् अपि कथं भवन्तौ परस्परं न जानीतः ? एतत् तु आश्यर्यकरं खलु !'' इति ।

तदा तौ उक्तवन्तौ – ''महानुभावाः ! आवां परस्परं न जानीवः इति केन उक्तम् ? आवां तु भ्रातरौ एव । परस्परं सम्यक् जानीवः एव । किन्तु मार्गस्य नीरसताम् अपनेतुम् आवाम् किमपि सम्भाषणं कर्तुम् इष्टवन्तौ । तस्य कोऽपि विषयः भवेत् खलु ? परिचयप्रश्नः एव सम्भाषणविषयः आसीत्'' इति ।

एतावत् उक्त्वा तौ अग्रे गतवन्तौ । जनाः महता आश्चर्येण तयोः गमनं पश्यन्तौ तत्रैव स्थितवन्तौ ।

मयङ्कमोहनः, १२कक्ष्या, डी.सी.जी.सी.इण्टर्कालेज् मेरठ (उ.प्र.)
१५२ए, नेहरूनगरम्, गढरोड्, गली नं-१, मेरठ – २५० ००१(उ.प्र.)



# आभरणव्यामोहः

शेखरः बाल्ये एव मातृविहीनः अभवत् । तस्य पिता महादेवः स्वयं पुत्रं पालयितुम् अशक्तः सन् दुर्गानामिकां काञ्चन कन्यकाम् ऊढवान् । विवाहानन्तरं मासाभ्यन्तरे एव महादेवेन ज्ञातं यत् स्वपत्नी कलहशीला कठिनमनस्का च इति ।

दुर्गा पत्युः विषये अनादरवती आसीत् । तस्याः आभरणविषये महान् व्यामोहः । अतः आभरणानां निमित्तं महान् व्ययः तया कृतः । आभरणानां सङ्ग्रहणे निरता सा ।

महादेवस्य किञ्चित् एव क्षेत्रम् आसीत् । ततः प्राप्तेन आयेन सः गृहनिर्वहणं करोति स्म । किन्तु दुर्गायाः आभरणव्यामोहस्य कारणतः इदानीं धनविषये अतीव चिन्तग्रस्तः अभवत् सः ।

शेखरोऽपि दशवर्षीयः अभवत् । दुर्गा शेखरेण बहूनि गृहकार्याणि कारयति स्म । गृहकार्याणि समाप्य शालां गत्वा श्रद्धया पठति स्म शेखरः । तस्य मनसि विद्यायाः विषये महती आसक्तिः आसीत् । किन्तु उन्नतविद्याभ्यासं कर्तुं दुर्गया अनुमतिः न दत्ता । सा एकदा शेखरम् उक्तवती– ''इदानीं यावत् पठितं तदेव अधिकम् । भवतः पिता न भूस्वामी । क्षेत्रे कार्यं कर्तुं पठनस्य आवश्यकता नास्ति । उन्नतविद्याभ्यासस्य चिन्तनं त्यजतु'' इति ।

किन्तु पिता महादेवः अन्यथैव चिन्तितवान् । सः पत्नीं दुर्गाम् उक्तवान् - ''अस्माकं शेखरः एकः एव पुत्रः । उन्नतविद्याभ्यासं कर्तुं धनम् आवश्यकमिति अहमपि जानामि । एकरपरिमितं क्षेत्रं विक्रीय अस्य विद्याभ्यासं कारयाम । पठनेन बुद्धिमान् भूत्वा क्षेत्रस्य पालनम् इतोऽपि उत्तमरीत्या कुर्यात् सः'' इति ।

तदा दुर्गा पतिं भर्त्सयन्ती उक्तवती – ''क्षेत्रस्य अल्पस्य अपि भागस्य विक्रयणम् अहं न अङ्गीकरोमि'' इति ।

ततः दिनद्वयम् अतीतम् । तृतीये दिने कश्चन

पुरुषः गृहम् आगत्य महादेवस्य हस्ते एकं स्यूतं संस्थाप्य - ''महोदय ! नगरे वाणिज्यं कुर्वाणः नीलकण्ठः भवत्तः दशसहस्त्रस्य रूप्यकाणां साहाय्यं प्राप्तवान् आसीत् । तस्य वाणिज्यम् इदानीं समीचीनतया प्रचलति । किन्तु तस्य आरोग्यम् एषु दिनेषु नष्टम् । मरणात् पूर्वम् ऋणं प्रत्यर्पणीयम् एव इति तस्य मनसि विचारः आगतः । अतः सः एतत् धनं भवते प्रेषितवान् अस्ति'' इति उक्त्वा नमस्कारं कृत्वा ततः निर्गतवान् ।



महादेवः अनेन बहु सन्तुष्टः सन् पत्नीम् उक्तवान् - ''लक्ष्मीः आकस्मिकरूपेण गृहम् आगता । अस्य धनस्य किञ्चिद्भागं व्ययीकृत्य शेखरस्य विद्याभ्यासं कारयाम । इदानीं क्षेत्रस्य विक्रयणविषयः एव न उदेति'' इति ।

दुर्गा झटिति तं स्यूतं स्वीकृत्य उक्तवती - ''शेखरस्य विद्याभ्यासः न तावत् प्रमुखः । आगामिनि सप्ताहे मम पितृव्यायाः पौत्र्याः विवाहः अस्ति । अतः अहम् अनेन धनेन एकं चन्द्रहारं क्रेष्यामि । सायं नगरे स्थितं स्वर्णकारस्य आपणं गच्छाव'' इति ।

तत्रैव समीपे स्थितः शेखरः पितुः परिस्थितिं दृष्टवान् । सः पितुः हस्तं गृहीत्वा उक्तवान् - ''तात ! भवान् मम विद्याभ्यास-चिन्तनं त्यजतु । मातुः इच्छा पूर्णा भवतु । अहं विद्याभ्यासं न करिष्यामि । भवता सह क्षेत्रे कार्यं करिष्यामि'' इति ।

तद्दिने एव दुर्गा स्वर्णकारापणं गता । दश-सहस्त्रं रूप्यकाणि, अन्यत् धनं चापि व्ययी-कृत्य सा एकं चन्द्रहारं क्रीतवती ।

भाटकयानं स्वीकृत्य ग्रामं प्रति प्रस्थित-वती सा । सर्वत्र अन्धकारः प्रसृतः आसीत् । यानं किञ्चिद्दूरम् अगच्छत् । तावति काले पृष्ठतः वेगेन आगतम् एकं यानम् अग्रे गतम् । तदा तस्मात् यानात् किमपि वस्तु अधः पतितम् । किन्तु याने स्थितानां दृष्टिः तत्र न आसीदेव । ते पृष्ठतः अनुसृत्य आगच्छत् यानं निवारयितुमेव वेगेन गतवन्तः । महादेवः दुर्गा च यदा यानेन तत् स्थानं प्राप्तवन्तौ तदा दुर्गा - 'यानं स्थगयतु । पतितं तत् वस्तु आनयतु च' इति यानचालकं रतनम् उक्त-वती ।

यानचालकः रतनः यानं स्थगितवान् । ततः अवतीर्य तत् वस्तु आनीतवान् । तत् वस्तु काष्ठमयी आभरणपेटिका आसीत् । तां पेटिकाम् उद्घाट्य दृष्टवान् रतनः तस्यां स्थितम् अमूल्यं स्वर्णहारं दृष्ट्वा उच्चैः उक्तवान्



– ''अहो, कियद्दीर्घः हारः !'' इति ।

दुर्गा झटिति तं हारं बलात् स्वीकृत्य उक्तवती – ''नगरं गन्तुम् अहमेव यानम् आनायितवती । एतां पेटिकाम् आनेतुमपि अहमेव उक्तवती । अतः एषः हारः ममैव'' इति ।

तदा रतनोऽपि उच्चस्वरेण – ''पतितं वस्तु मयापि दृष्टम् । अपि च पतितं तत् मया एव आनीतम् । अतः एषः हारः मम एव'' इति उक्तवान् ।

महादेवः दृढस्वरेण पत्नीम् उक्तवान् – ''एषः हारः बहुमूल्यः'' इति ।

दुर्गा पत्युः वचनम् उपेक्षमाणा रतनम् उक्तवती – ''शतरूप्यकात्मकं भाटकम् अधिकतया ददामि । तूष्णीं तिष्ठतु'' इति ।

रतनः किमपि अवदन् तूष्णीं स्थितवान् ।

अनन्तरदिने शेखरः कृषिक्षेत्रं प्रति प्रस्थितवान् । मार्गे सः यानचालकः रतनः मिलितवान् ।

तदा शेखरेण उक्तम् – ''यस्य हारः नष्टः सः महता दुःखेन स्यात् । अतः सः हारः ग्रामाधिकारिणे दातव्यः आसीत् । अतः भवान् एतं विषयं ग्रामाधिकारिणं वदतु'' इति ।

''एवं करणेन मम किं प्रयोजनम् ? अपि च मम उपरि चौर्यस्य आरोपः अपि भवितुम् अर्हति । तत् यानं भूस्वामिनः । अतः तस्य एकः हारः नष्टः चेत् कापि हानिः नास्ति । सः हारः मया यथा प्राप्येत तथा कमपि उपायं भवान् वदतु'' इति रतनेन उक्तम् ।

''परसम्पत्तिः मदधीना भवतु इति आशा कदापि न करणीया । तस्य वस्तुनः स्वामिने तस्य समर्पणम् उचितम् । भवता उक्तं यत् तत् यानं भूस्वामिनः इति । तर्हि भूस्वामिनमेव एतं विचारं वदतु । एष एव समीचीनः मार्गः । नो चेत् कष्टपरम्परा एव सम्मुखीकरणीया भवेत्'' इति शेखरः रतनम् बोधितवान् ।

''अहं तु तथा कर्तुं न शक्नोमि । किमर्थमिति अहं न जाने । अस्मिन् विषये मम महती भीतिः । धनिकानां प्रवृत्तिः एवमेव भवति इति वक्तुं न शक्यते । मामेव ते अपराधिनं भावयेयुः'' इति वदन् रतनः ततः निर्गतः एव ।

सप्ताहानन्तरं दुर्गा तमेव हारं धृत्वा पितृव्यायाः पौत्र्याः विवाहार्थं गतवती । सर्वेऽपि तं हारं प्रशंसितवन्तः । अपि च सर्वैः उक्तं यत् पश्यामः चेत् केनापि भूस्वामिनः गृहजनेन महत्या आसक्त्या हारः कारितः

स्यात् इति भाति इति ।

यावत् सर्वेऽपि भोजनार्थम् उपविष्टवन्तः तावता रायपुरस्य भूस्वामिनः केचन सेवकाः त्वरया अन्तः प्रविश्य उक्तवन्तः - ''भूस्वामिनः गृहे चौर्यम् अभवत् इति वार्ता । चौराः बृहतीं पेटिकां भञ्जयित्वा तस्यां स्थितानि आभरणानि नीतवन्तः । अस्माभिः वार्ता प्राप्ता यत् तेषु चोरेषु केचन अत्रापि सन्ति इति । ते अस्मान् वञ्चयितुं न प्रभवन्ति'' इति ।

ततः सेवकाः सर्वत्र परिशीलनम् आरब्धवन्तः । तदा कश्चन सेवकः दुर्गया धृतं हारं दृष्ट्वा उक्तवान् - ''कियत् धैर्यं भवत्याः ? चौर्येण आनीतं हारं धृत्वा सर्वेषां पुरतः धैर्येण हसन्ती अस्ति खलु भवती ! चोरस्य पत्नी एव स्यात् भवती'' इति ।

ततः तस्मिन् एव क्षणे भूस्वामिनः सेवकाः तां गृहीत्वा तस्याः पतिं महादेवम् अपि भूस्वामिनः समीपं नीतवन्तः ।

स्वमातापित्रोः बन्धनम् अभवत् इति यदा शेखरः ज्ञातवान् तदा एव सः रतनमपि स्वेन सह भूस्वामिनः समीपं नीतवान् । रतनः आदौ आगमनं न अङ्गीकृतवान् । किन्तु शेखरः परिस्थितिं विवृत्य तम् आत्मना सह भूस्वामिगृहं नीतवान् ।

शेखरस्य गमनात् पूर्वमेव भूस्वामी महादेवं दुर्गां च कारागारे स्थापितवान् आसीत् । शेखरः रतनेन सह गत्वा भूस्वामिनं दृष्ट्वा तद्दिने यद्यत् प्रवृत्तं तत्सर्वमपि रतनमुखात् एव श्रावितवान् ।

सर्वं श्रुत्वा भूस्वामी रतनं पृष्टवान् - ''भवतः कथनानुगुणं तत् यानं भूस्वामिनः



एव । तर्हि तत् यानं कुतः आगतं, कुत्र गतम् इति वदतु'' इति ।

''रायपुरग्रामात् रामवरग्रामस्य दिशि गतम्'' इति उक्तवान् रतनः ।

''यानचालकः कथमासीत् इति भवान् वक्तुं शक्नोति किम् ?'' इति पृष्टवान् भूस्वामी ।

''मया तस्य आकृतिः सम्यक् न दृष्टा । तस्य मुखे बृहत् श्मश्रु आसीत् । रक्तवर्णम् उष्णीषं धृतवान् आसीत् सः'' इति रतनः उक्तवान् ।

भूस्वामी क्षणकालं विचिन्त्य सेवकम् आज्ञापितवान् - ''गच्छतु । अश्वशकटचालकं मार्तण्डम् आनयतु'' इति ।

क्षणाभ्यन्तरे मार्तण्डः तत्र आगतः । आगमनसमनन्तरमेव सः भूस्वामिनः पादौ गृहीत्वा - ''क्षम्यताम् । प्रभो, अहं कुटुम्बी अस्मि । मम परिवारः अधिकः । लोभेन आविष्टः सन् रामभूपतेः वचने विश्वस्य अहमेव तेन सह तानि चोरितानि आभरणानि रामवरं प्रापितवान्'' इति ।

ततः विचारणया ज्ञातं यत् भूस्वामिनः श्यालः रामभूपतिः तं हारम्, अन्यानि आभरणानि च नगरे विक्रीतवान् इति ।

तदा भूस्वामी - ''इदानीं मया ज्ञातं यत् रामभूपतिः न केवलं दुष्टः, अपि तु चोरः अपि इति । इदानीं विलम्बः न करणीयः । तस्य दण्डनं भवेत् एव । शीघ्रं गत्वा तस्य बन्धनं कृत्वा कारागारे स्थापयन्तु'' इति सेवकान् आज्ञापितवान् ।

ततः सः महादेवं दुर्गां च कारागारतः विमोच्य दुर्गाम् उक्तवान् - ''भवतोः पुत्रस्य सद्गुणेन आकृष्टः सन् अहं भवन्तौ क्षान्तवान् अस्मि । स्त्रीणाम् आभरणविषयकः व्यामोहः तु सहजः । किन्तु सः व्यामोहः दुष्टमार्गं न प्रापयेत् । इतः परं जागरूकौ भवताम्'' इति ।

दुर्गा स्वापराधम् अङ्गीकृत्य - ''इतः परम् अहं कदापि एवं न करिष्यामि'' इति प्रतिज्ञां कृतवती ।

शेखरस्य सत्यवादितां बुद्धिमत्तां च बहुधा प्रशंसितवान् भूस्वामी तस्य उन्नतविद्याभ्यासस्य निमित्तं यानि आनुकूल्यानि अपेक्षितानि तानि सर्वाणि ससन्तोषं कल्पितवान् ।





# भल्लूकमान्त्रिकः

८

[अनुसृत्य आगच्छतः भल्लूकमान्त्रिकतः आत्मनः रक्षणाय राजा दुर्मुखः पलायितवान् । किन्तु राक्षसम् उग्रदण्डं दृष्ट्वा तु सः मूर्च्छां गतः । उग्रदण्डः अङ्गरक्षकम् आदिष्टवान् । - झटिति जलम् आनयतु इति । झरीसमीपे कर्तितशुण्डः गजः अङ्गरक्षकं दृष्ट्वा उद्वेगं प्राप्य घीङ्कुर्वन् धावन्तं तम् अनुसृतवान् । तदनन्तरम् .... ]

राक्षसः उग्रदण्डः स्वसमीपम् आगच्छन्तं गजं सकृत् दृष्ट्वा वधकभल्लूकम् अवदत् - ''किम् एषः कर्तितशुण्डः गजः भवतः वाहनम् ? एषः तु वन्यगजः इव भाति !'' इति ।

''एषः तु वन्यगजः एव । सः मम मार्गम् अवरोद्धुम् उद्युक्तः । अहं मम परशुना तस्य शुण्डां व्रणितां कृत्वा तम् आरुह्य एतावत्-पर्यन्तम् आगतवान्'' इति अवदत् वधक-भल्लूकः ।

अत्रान्तरे सः गजः समीपम् आगतः एव । एतत् दृष्ट्वा नागमल्लः तदनुचरौ च गुहां प्रति धावितवन्तः । तदा एव सचेतनतां प्राप्तवान् राजा दुर्मुखः झटिति उत्थाय वृक्षसमूहं प्रति धावितवान् । अङ्गरक्षकः चीत्कुर्वन् उग्रदण्डस्य पृष्ठतः अतिष्ठत् ।

उग्रदण्डः शिलागदाम् उन्नीय तम् उद्दिश्य - ''अये ! किञ्चित्पूर्वं भवता उक्तम् आसीत्



– अहं भवतः अङ्गरक्षकः अस्मि इति । इदानीं भाति यत् अहम् एव भवतः अङ्गरक्षकः जातः अस्मि इति । अङ्गरक्षकापसद ! किम् एतावत् एव शौर्यं भवतः ?'' इति वदन् गदाचालनेन भीतिम् उत्पाद्य गजं ततः अपसारितवान् ।

वधकभल्लूकः परशुं भ्रामयन् गजस्य पुरतः स्थित्वा – ''अये, तिष्ठ तिष्ठ । किं भवता अहं न अभिज्ञातः ? अहमस्मि वधकभल्लूकः । भवान् मम वाहनम् अस्ति'' इति ।

यावत् वधकभल्लूकस्य वचनं न समाप्तं तावता गजः अग्रे आगत्य शुण्डां प्रसार्य तम् उन्नीय दूरे क्षेप्तुम् उद्युक्तः ।

तदा उग्रदण्डः झटिति अग्रे गत्वा उत्प्लुत्य गजस्य उपरि उपविश्य तदीयम् एकं कर्णं गृहीत्वा निपीडितवान् । अपरेण हस्तेन गदाम् उन्नीय बलात् प्रहृतवान् च । तदा वेदनां प्राप्तवान् गजः वधकभल्लूकं भूमौ क्षिप्त्वा स्वयमपि भूमौ अपतत् । उग्रदण्डः पुनरपि झटिति अधः उत्प्लुत्य गजस्य पादौ गृहीत्वा उन्नीय उच्चस्वरेण अवदत् – ''अये अङ्गरक्षक ! झटिति गत्वा लतारज्जुं काञ्चित् आनयतु । तया एतं बध्नीयाम'' इति ।

अङ्गरक्षकः एतम् आदेशं श्रुत्वा वनगुल्मानां दिशि धावितवान् । विसंज्ञः यथा करोति तथा अक्ष्णोः निमीलनम् उन्मीलनं च कुर्वन् हस्ताभ्यां शिरः गृहीत्वा वधकभल्लूकः अवदत् – ''उग्रदण्ड ! मम परशोः अपि भवतः बाहुबलम् अधिकम् । भवता अहं रक्षितः । एतस्मात् अहं नितरां प्रसन्नः अस्मि भवद्विषये । यत् इष्यते तत् प्रार्थयतु । ददामि'' इति ।

तदा उग्रदण्डः मन्दहासपूर्वकम् वधकभल्लूकं पश्यन् अवदत् – ''यदि किमपि प्रार्थनीयं स्यात् तर्हि अहं भवतः गुरुं भल्लूकमान्त्रिकम् एव प्रार्थयेयं, न तु भवन्तम् । इदानीम् एतस्य गजस्य पादौ गृह्णातु । अन्यथा एषः पलायितुं प्रयासं कुर्यात्'' इति ।

''किं मया वाहनभूतस्य एतस्य पादौ ग्रहीतव्यौ ? नितराम् अपमानकरम् एतत् । अन्यच्च, किं पादग्रहणेन ? मम एतेन परशुना एतस्य शिरश्छेदम् एव करिष्यामि'' इति परशुम् उन्नीय अवदत् वधकभल्लूकः ।

''अये तिष्ठतु ! भवतः तु वधकवृत्तिः । अतः मारणमात्रं जानाति भवान् । यदि एषः गजः मार्येत तर्हि स्वस्य उद्देशस्य साधनस्य अनन्तरं गुरोः भल्लूकमान्त्रिकस्य समीपं कथं

वा गम्येत भवता ? तावद्दूरं गन्तुं किं वाहनं भवेत् भवतः ?'' इति अपृच्छत् उग्रदण्डः ।

यदा राक्षसेन उग्रदण्डेन एवं कर्तव्यं स्मारितं तदा झटिति बोधं प्राप्तवान् वधकभल्लूकः - ''अहो, मया आगमनोद्देशादिकं सर्वथा विस्मृतम् आसीत् । सः दुष्टः राजा दुर्मुखः क्व ? स तु अत्रैव क्वचित् मूर्च्छां प्राप्य पतितः आसीत्'' इति वदन् परितः दृष्टिं प्रसारितवान् ।

भूमौ पतितः गजः उग्रदण्डस्य ग्रहणात् आत्मनः रक्षणाय प्रयतमानः घीङ्कुर्वन् आसीत् । स्वस्य ग्रहणं शिथिलम् अकुर्वन् उग्रदण्डः - ''अये, अङ्गरक्षक ! क्व गतः भवान् ? लतारज्ज्वाः आनयने किमर्थम् एतावान् विलम्बः ?'' इति अपृच्छत् ।

''उग्रदण्डवर्य ! एते वयं स्मः भवतः साहाय्यार्थम्'' इति वदन्तः नागमल्लादयः एकां दीर्घां रज्जुं स्वीकृत्य तत्र उपस्थिताः ।

उग्रदण्डः 'रज्ज्वा गजस्य पादौ बध्नन्तु' इति आदिश्य तान् उद्दिश्य अवदत् - ''अहो, चोराग्रेसराः भवन्तः । आवश्यकानि वस्तूनि सर्वाणि सदा सिद्धानि भवन्ति भवतां समीपे'' इति ।

नागमल्लः गजपादयोः बन्धनकार्यम् अनुचराभ्यां समर्प्य उग्रदण्डम् उद्दिश्य अवदत् - ''उग्रदण्डवर्य ! वयं तु अरण्यवासिनः । इतः गमनस्य अनन्तरं भवता अस्मदीयम् एकं साहाय्यं करणीयम्'' इति ।

''साहाय्यम् अवश्यं करिष्यामि । वधकभल्लूकेन एव स्वशिरः कर्तनीयम् इति खलु भवताम् अपेक्षा ? सा तु अवश्यं पूरिता



भविष्यति'' इति उपहासमिश्रितेन स्वरेण अवदत् उग्रदण्डः ।

एतत् श्रुत्वा नितरां भीतः नागमल्लः यावत् किमपि वक्तुम् उद्युक्तः तावता वधकभल्लूकः -'शिरीषभैरव !' इति सकृत् उद्घोष्य परशुम् उन्नीय - ''अये, जनानां लुण्ठनं कुर्वन्तः दुष्टाः ! राजा दुर्मुखः क्व गतः ? झटिति उत्तरं यदि न दीयते तर्हि भवतां शिरः कर्तितः भवेत्'' इति अगर्जत् ।

लुण्ठाकः नागमल्लः करौ योजयित्वा - ''भल्लूकवर्य ! आत्मानं दुर्जयगुप्तम् उक्तवान् सः दुर्मुखराजः अत्रैव कुत्रापि विसंज्ञः सन् पतितः आसीत्'' इति अवदत् ।

''तत् तु मया अपि ज्ञायते । किन्तु इदानीं सः कुत्र अस्ति ? तस्य शिरः न कर्तितः चेत् भल्लूकमान्त्रिकः मम शिरः कर्तयिष्यति'' इति



अवदत् वधकभल्लूकः ।

अत्रान्तरे नागमल्लस्य अनुचराभ्यां गजस्य अग्रिमौ पादौ रज्ज्वा बद्धौ आस्ताम् । गजः पृष्ठभागीयाभ्यां पादाभ्याम् उत्थातुं प्रयतमानः आसीत् । तावता लतारज्जुं गृहीत्वा अङ्गरक्षकः तत्र उपस्थितः ।

राक्षसः उग्रदण्डः नागमल्लस्य अनुचरौ आज्ञापितवान् यत् एतया लतारज्ज्वा गजस्य अन्यौ अपि पादौ बन्धव्यौ इति । ततः सः अङ्गरक्षकम् अपृच्छत् - ''अये अङ्गरक्षक ! भवतः नेत्रयोः दर्शनात् भासते यत् भवान् किमपि रहस्यं गोपयन् अस्ति इति । वृक्षसमूहे निलीय स्थितः राजा दुर्मुखः क्वचित् दृष्टः स्यात् खलु भवता ?'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् अङ्गरक्षकः अवदत् - ''इदानीम् अहं दुर्मुखस्य अङ्गरक्षकः नास्मि खलु ? अहं तु भवतः अङ्गरक्षकः अस्मि'' इति ।

तदा वधकभल्लूकः द्वित्राणि पदानि अग्रे स्थापयित्वा अङ्गरक्षकम् अवदत् - ''दुर्मुखः कुत्र इति भवान् जानाति एव । भवतः एषा चञ्चलदृष्टिः एव तत् ज्ञापयति । यदि भवान् सत्यं न प्रकाशयेत् तर्हि एषः मम परशुः भवतः शिरः भूमौ पातयेत्'' इति ।

एतत् श्रुत्वा चीत्कारं कुर्वन् अङ्गरक्षकः उग्रदण्डस्य पृष्ठभागे तिष्ठन् उच्चस्वरेण - ''हा हन्त ! एषः मारयिष्यति माम् । उग्रदण्डवर्य ! अङ्गरक्षकः एषः भवता एव रक्षणीयः'' इति अवदत् ।

तदा उग्रदण्डः तं कण्ठे गृहीत्वा अग्रे आकृष्य - ''यदि भवान् दुर्मुखवार्तां गोपयितुं प्रयत्नं कुर्यात् तर्हि अहम् अपि भवन्तं न रक्षेयम् । लतारज्जुम् आनेतुं गतवता भवता राजा दुर्मुखः दृष्टः एव । भवतोः सम्भाषणम् अपि प्रवृत्तं स्यात् तत्र । एषा एव वस्तुस्थितिः । तथापि किमपि अजानन् इव व्यवहरति भवान् । वस्तुस्थितिः न उक्ता चेत् गजः एषः भवन्तं शुण्डया गृहीत्वा दूरे क्षेप्स्यति'' इति वदन् तं गजसमीपं नीतवान् ।

तदा अङ्गरक्षकः भीत्या कम्पमानः करौ योजयित्वा उन्नीय - ''उग्रदण्डमहाराज ! अहं शरणं गतः अस्मि । राजा दुर्मुखः माम् उक्तवान् अस्ति यत् इतः पलायनाय साहाय्यं कृतं चेत् अर्धराज्यं दास्यन्ते इति । भवतां नेत्रयोः धूलिं निक्षिप्य इतः पलाय्य उदयगिरिनगरं प्राप्तव्यम् इति तस्य योजना । इतः गमनस्य अनन्तरं सः मम राज्याभिषेकं

प्रवर्तयिष्यति'' इति अवदत् ।

''भवान् एतस्मिन् वचने विश्वासं कृतवान् खलु ? अये मूर्ख, अङ्गरक्षक ! मानवः सन् भवान् मानवस्य वचने विश्वासं करोति खलु ? एतत् तु महते आश्चर्याय ! राज्याभिषेकः भविष्यति इति तु अवास्तविकः स्वप्नः । इतः गमनानन्तरं चतुष्पथे भवतः शिरसः छेदं कारयिष्यति सः । मूर्खः भवान् एतत् न जानाति'' इति हसन् अवदत् उग्रदण्डः ।

''तथा भवेत् अपि । अतः अहम् इतः कुत्रापि न गमिष्यामि । भवता सहैव वसन् जीवनं यापयिष्यामि'' इति अवदत् अङ्गरक्षकः ।



एतत् शृण्वन् स्थितः वधकभल्लूकः एतं सम्भाषणम् असहमानः – ''किम् एतया व्यर्थचर्चया ! भल्लूकमान्त्रिकस्य अपमानकर्तारं दुर्मुखं गृहीत्वा मम पुरतः उपस्थापयेयुः भवन्तः । यदि एवं न क्रियते तर्हि भवतां सर्वेषां शिरः कर्तयित्वा, तैः शिरोभिः मालां रचयित्वा कण्ठे धरिष्यामि'' इति क्रोधमिश्रितेन स्वरेण अवदत् ।

तदा उग्रदण्डः अपृच्छत् – ''किम् एतेषां सर्वेषां जनानां शिरः छेत्तुं भवान् एकः एव शक्नुयात् ?'' इति ।

'एषः परशुः भल्लूकमहाराजस्य वरप्रसादः । एतत्सदृशम् आयुधम् अन्यत् नास्ति । भवतः एषा गदा मम परशोः पुरतः तृणायते । यदि इच्छा तर्हि परीक्षताम्'' इति वदन् वधकभल्लूकः परशुम् उन्नीय द्वित्राणि पदानि अग्रे स्थापितवान् ।

तदा राक्षसः द्वित्राणि पदानि पृष्ठतः स्थापयित्वा – ''अये, वधकभल्लूक ! मया पूर्वम् एव स्मारितम् – आवयोः कलहः एतेषां दुष्टानां लाभाय भविष्यति इति । किं तत् विस्मृतं भवता ?'' इति ।

''सत्यं, सत्यम् । राज्ञः दुर्मुखस्य शिरः कथं प्राप्तव्यं मया ? तद्विना भल्लूकमान्त्रिकस्य मुखं कथं वा दृश्येत मया ?'' इति अवदत् वधकभल्लूकः ।

''तस्य अन्वेषणम् अत्र अरण्ये लीलया कर्तुं शक्यते । प्रासादवासी, उद्यानविहारी सः सुखजीवी राजा एतस्मिन् घोरे अरण्ये एकाकितया कियत्कालं स्थातुं शक्नुयात् ?'' इति अवदत् उग्रदण्डः ।

दुर्मुखस्य अन्वेषणाय सर्वे इतस्ततः दृष्टिं प्रसारितवन्तः । तावता चीत्कारमिश्रितः कश्चन उच्चैः कण्ठध्वनिः श्रुतः – ''भो भोः, शीघ्रं

बाणप्रयोगः क्रियताम् । अहम् उदयगिरिराजः अस्मि । यः मम प्राणानां रक्षणं करिष्यति तस्मै अर्धराज्यं दास्यते मया'' इति ।

स च ध्वनिः आसीत् राज्ञः दुर्मुखस्य । अङ्गरक्षकः क्रोधेन दुर्मुखदिशि धावन् - ''यत् अर्धराज्यं देयत्वेन प्रतिज्ञातम् आसीत् तस्य अन्यस्मै दानं सर्वथा न सहे अहम्'' इति उच्चैः अवदत् ।

दुर्मुखसमीपं गतः सः अपश्यत् यत् राजा दुर्मुखः शाखायां सर्पन् मन्दं गच्छन् अस्ति, तस्य पृष्ठतः एव कश्चन चित्रकः अपि सर्पन् तम् अनुसरति इति । दंष्ट्रां प्रदर्शयन्तं गर्जन्तं तं चित्रकं लक्ष्यीकृत्य बाणप्रयोगे उद्युक्तः कश्चन भिल्लः अपि तेन दृष्टः ।

अङ्गरक्षकं दूरात् दृष्ट्वा राजा दुर्मुखः उच्चस्वरेण - ''अये ! अङ्गरक्षक ! किं मौनेन दृश्यते ? मां ग्रहीतुम् उद्युक्तम् एतं चित्रकं मारयतु शीघ्रम् । तस्मात् भिल्लतरुणात् धनुर्बाणादिकं वशीकरोतु'' इति अवदत् ।

अङ्गरक्षकः दुर्मुखस्य रक्षणाय किमपि प्रयत्नम् अकुर्वन् अपृच्छत् - ''महाराज ! यः चित्रकं मारयति तस्मै अर्धराज्यं दास्यते इति भवता एव उक्तं खलु ?'' इति ।

''आम् ! मया एव उक्तम् । अलं चर्चया । एतं चित्रकम् अचिरात् एव मारयतु रे'' इति क्रोधेन अवदत् दुर्मुखः ।

''यदि भवान् चित्रकस्य मारयित्रे मह्यं च राज्यार्धं दद्यात् तर्हि भवत्समीपे किम् अवशिष्येत?'' इति अपृच्छत् अङ्गरक्षकः ।

''प्राणाः अवशिष्यन्ते, प्राणाः ! अवगतं खलु ? आदौ एतं मारयतु'' इति आदिशत् राजा ।

भिल्लतरुणः राजानं दुर्मुखम् अङ्गरक्षकं च सकृत् दृष्ट्वा - ''मह्यं न अर्धराज्यम् आवश्यकं, न वा पूर्णराज्यम् । पञ्च रजतमुद्राः दीयन्ताम्'' इति उक्त्वा चित्रकं लक्ष्यीकृत्य बाणं प्रयुक्तवान् ।

बाणः चित्रकस्य उरोभागे लग्नः । व्रणितः चित्रकः अग्रिमपादेन राजानं प्राहरत् । तस्मात् राज्ञः ग्रहणं शिथिलं जातम् । अतः सः शाखातः अपतत् । तेनैव सह चित्रकः अपि अपतत् । *- (अनुवर्तते)*



# वेताल-कथा

## सौन्दर्यम्

दृढव्रती त्रिविक्रमः पराजयं कथमपि अङ्गीकर्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् – ''अये, राजन् ! भवान् महाबुद्धिमान् इति अहं जानामि । किं करणीयं, किं न करणीयम् इति भवान् जानाति एव । तथापि एवं मध्यरात्रे एतस्मिन् घोरे श्मशानमार्गे किमर्थम् अट्यते भवता ? महाबुद्धिमान् अपि जनः कदाचित् परिस्थितेः कारणतः मानसिक्या समस्थित्या विरहितः सन् मूर्खः इव व्यवहारं करोति । भवता अपि तथा



न करणीयं खलु ? पूर्वं कदाचित् जयन्तः नाम राजकुमारः एवमेव कृतवान् आसीत् । सः कामदेवः इव सुन्दरः तु आसीत् । किन्तु फलप्राप्तिकाले महतीं मूर्खताम् आचरितवान् सः । तद्वत् भवता अपि न करणीयम् इत्यतः तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

रघुवर्मा काञ्चनपुर्याः राजा । उभयोः पुत्र्योः प्राप्तेः अनन्तरं तेन एकः पुत्रः प्राप्तः । तस्य शिशोः सौन्दर्यं दृष्ट्वा राजा राज्ञी च आश्चर्येण स्तब्धौ । तयोः आनन्दस्य सीमा एव न आसीत् । तौ दिने दिने वर्धमानसौन्दर्यस्य तस्य बालस्य नाम कृतवन्तौ जयन्तः इति ।

जयन्तः सुन्दरः यथा तथैव सद्गुणसम्पन्नः अपि आसीत् । यदा सः किशोरावस्थां प्राप्तवान् तदा राजा तम् अरावलीपर्वत-समीपस्थं कृष्णचन्द्रस्य गुरुकुलं प्रति प्रेषित-वान् । तत्र गुरुकुलस्य सर्वान् नियमान् श्रद्धया पालयन् जयन्तः राजोचिताः सर्वाः विद्याः शास्त्राणि च अधीतवान् । विद्याभ्यासस्य समाप्तेः अनन्तरं सः गुरोः अनुज्ञां प्राप्य राजधानीं प्रत्यागतवान् ।

अचिरात् एव पट्टाभिषेकं निर्वर्त्य शासन-कार्यं तस्मै अर्पणीयम् इति राज्ञः रघुवर्मणः विचारः आसीत् । किन्तु जयन्तः पितुः एतं विचारम् अनङ्गीकुर्वन् अवदत् यत् अहं देशसञ्चारं कर्तुम् इच्छामि इति । राजा पुत्रस्य एताम् इच्छां युक्ताम् एव अमन्यत । अतः तस्मै योग्यम् अश्वं धनम् इत्यादिकं दत्त्वा राजा तं प्रेषितवान् ।

राजभवनात् निर्गतः जयन्तः सप्ताहाभ्यन्तरे पूर्वभागीयान् पर्वतप्रदेशान् प्राप्तवान् । तत्र अस्ति काञ्चनगिरिः नाम उन्नतः पर्वतः । तस्य शिखरे कश्चन प्राचीनः देवालयः आसीत् । कात्यायनी तत्रत्या अधिदेवता । तस्याः पूजार्थं यक्ष-किन्नर-गन्धर्वादयः देव-देवतादयः च तत्र आगच्छन्ति स्म । जयन्तेनापि तस्य मन्दिरस्य प्रसिद्धिः श्रुता आसीत् । अतः देव्याः दर्शनाय सः काञ्चनगिरिशिखरं गत-वान् ।

मन्दिरस्य अग्रभागः सुन्दरः स्वच्छः च आसीत् । मन्दिरस्य पुरतः कश्चन सरोवरः आसीत् । तस्मिन् श्वेतानि रक्तानि च कुमुदानि शोभन्ते स्म । जयन्तः तस्मिन् सरोवरे स्नानं कृत्वा देव्याः दर्शनं कृतवान् ।

यदा सः ततः प्रतिगन्तुम् उद्युक्तः तदा

कश्चन मृदुमधुरः वीणानादः श्रुतः । जयन्तः परिवृत्य अपश्यत् । तत्र मेघवर्णीयेन वस्त्रेण शोभमाना काचित् देवकन्या वीणां वादयन्ती दृष्टा । जयन्तः आश्चर्यपूर्णया दृष्ट्या ताम् अपश्यत् । तदा सा देवकन्या वीणां भूमौ स्थापयित्वा मन्दहासपूर्वकम् उक्तवती – ''अहं चित्रलेखा नाम गन्धर्वकन्या । गन्धर्वलोके मम वासः । भवान् कः इति किम् अहं ज्ञातुं प्रभवेयम् ?'' इति ।

जयन्तः स्नेहपूर्णया एव वाण्या स्वस्य विषये पूर्णं विवरणम् अवदत् ।

सर्वं श्रुत्वा चित्रलेखा अवदत् – ''कोऽपि गन्धर्वतरुणः मह्यं न अरोचत अद्यावधि । अतः अहम् अद्यापि अविवाहिता एव अस्मि । भवतः सौन्दर्यं मम हृदयम् अहरत् । यदि भवान् मम परिणयम् अङ्गीकुर्यात् तर्हि आवां गन्धर्वलोके सुखेन दिनानि यापयितुं शक्नुयाव'' इति ।

तदा जयन्तः अवदत् – ''अहम् एतस्य देशस्य भावी राजा । सिंहासनारोहणात् पूर्वं देशसञ्चारः करणीयः, जनानां कष्टसुखादीनि स्वयं ज्ञातव्यानि इति सङ्कल्प्य अहं देशसञ्चारार्थम् उद्युक्तः अस्मि । विवाहविचारः सद्यः मम मनसि सर्वथा नास्ति । क्षन्तव्यः अहम्'' इति ।

एतावत् उक्त्वा यावत् सः ततः निर्गन्तुम् उद्युक्तः तावता चित्रलेखा अवदत् – ''प्रायः अहं न अरोचे भवते । भवतु नाम । भवता सह कञ्चित् कालं भ्रमणं करणीयम् इति मम इच्छा । अतः आत्मना सह मामपि नयतु कृपया'' इति ।



जयन्तः एतां प्रार्थनां तिरस्कर्तुं न शक्तवान् । अतः सः आत्मना सह तस्याः नयनम् अङ्गीकृतवान् । चित्रलेखा सन्तोषेण तस्य अश्वम् आरूढवती ।

ततः तौ विविधान् प्रदेशान् गतवन्तौ । यत्र यत्र गतं तत्र सर्वत्र जयन्तः जनानां समस्याः शृण्वन् तेषां कष्टानि अवगच्छन् यथाशक्ति साहाय्यं करोति स्म । यः आहारः लभ्यते तेन सन्तुष्टः भवति स्म सः । भूमिः एव तस्य शय्या आसीत् । चित्रलेखया अपि एवमेव करणीयम् अभवत् ।

भूलोकवासिनां जीवनपद्धतिः तया अपि अवगता । मानवजीवनस्य वैविध्यम् अपि तया ज्ञातम् ।

कदाचित् जयन्तः चित्रलेखा च अरण्यमार्गेण गच्छन्तौ आस्ताम् । तदा कस्यचित्



वृक्षस्य अधः काचित् कुरूपिणी ताभ्यां दृष्टा । तस्याः मुखे महत् दुःखं दृश्यते स्म । जयन्तः तस्याः समीपं गत्वा दुःखस्य कारणम् अपृच्छत् ।

तदा सा युवतिः अवदत् – ''मम नाम जलजा इति । अहं जन्मना कुरूपिणी । रविः नाम युवकः माम् इच्छति । मम विषये तस्य करुणा अनुरागः चापि । सः वदति यत् अहं यदि परिणयेयं तर्हि जलजाम् एव इति । किन्तु तस्य माता कुरूपिणीं मां स्नुषां कर्तुं न इच्छति । सा तं वदति – 'यदि जलजा भवता परिणीयेत तर्हि अहम् आत्महत्यां करिष्यामि' इति । एतत्सर्वं सोढुम् अशक्ता अहं मरणं प्राप्तुम् अत्र आगता । किन्तु मरणप्रयत्नं कर्तुम् असमर्था सती अत्र उपविष्टा अस्मि भयकारणतः'' इति ।

तस्याः कथां श्रुतवतः जयन्तस्य मनसि करुणा उत्पन्ना ।

सः चित्रलेखाम् अवदत् – ''भवती देवकन्या खलु ? किम् एतस्याः कुरूपं निवारयितुं किमपि कर्तुं शक्येत ?'' इति ।

चित्रलेखा मन्दहासपूर्वकं जलजायाः समीपं गतवती, तस्याः शिरसि हस्तं स्थापितवती च । तदा जलजा सुन्दरयुवतिरूपेण परिवृत्ता जाता ।

एतत् ज्ञात्वा सा सन्तोषम् आनन्दं च अनुभवन्ती उभयोः कृते कृतज्ञतां समर्प्य ततः निर्गता ।

जलजायाः निर्गमनस्य अनन्तरं चित्रलेखायाः अभिनन्दनार्थं जयन्तः मुखं परिवर्तितवान् । तत्र चित्रलेखायाः रूपं समग्रतया परिवृत्तं तेन दृष्टम् । सा कुरूपिणी जाता आसीत् । तस्याः कुरूपतां दृष्ट्वा जयन्तः नितराम् आश्चर्यचकितः ।

तस्याः पूर्वतनस्य रूपस्य, वर्तमानस्य रूपस्य च महत् अन्तरम् आसीत् । पूर्वं या सौन्दर्यराशिः आसीत् सा इदानीं कुरूपपिण्डं जाता आसीत् ।

केषाञ्चित् क्षणानाम् अनन्तरं सः चित्रलेखाम् अपृच्छत् – ''भवत्या एतावान् महात्यागः किमर्थं कृतः ? किमर्थं जलजायाः निमित्तं स्वसौन्दर्यस्य नाशः भवत्या अङ्गीकृतः ?'' इति ।

तदा चित्रलेखा अवदत् – ''भवता सह एतावन्ति दिनानि स्थित्वा अहं ज्ञातवती अस्मि यत् निस्स्वार्थसेवातः एव परमानन्दः इति । तादृशीं सेवां कर्तुं ममापि एषः सुवर्णावकाशः

इति मया चिन्तितम् । जलजां सुन्दरीं कर्तुम् अन्यः मार्गः न आसीत् अपि । अहं तस्याः आनन्दाय मम सौन्दर्य समर्पितवती'' इति ।

तस्याः उत्तरं श्रुत्वा नितरां सन्तुष्टः जयन्तः - ''भवती न सर्वथा कुरूपिणी । मनोमोहकं रूपं भवत्याः । एषोऽहं भवतीं परिणेतुम् इच्छामि'' इति उक्त्वा चित्रलेखायाः हस्तं गृहीतवान् ।

अनन्तरक्षणे एव चित्रलेखा पूर्वतनं सुन्दरं रूपं प्राप्तवती आसीत् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! जयन्तः सुन्दरः स्यात् नाम, किन्तु तस्य विवेकः आसीत् इति किं वक्तुं शक्येत ? यस्याः सुन्दर्याः परिणयः एव तेन निराकृतः तस्याः परिणयः अविचिन्त्य अङ्गीकृतः, तदपि कुरूपताप्राप्तेः अनन्तरम् ! किम् एषः युक्तः व्यवहारः ? भवतीं परिणेष्यामि इति सः यत् उक्तवान् तत् अर्थहीनं वचनं खलु ? जयन्तः किं समचित्तः ? किं तस्य व्यवहारः विवेकरहितः न ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''जयन्तस्य व्यवहारः दर्शयति तदीयां मानसिकीं परिपक्वताम् । जयन्तः अशाश्वतं सौन्दर्यं श्रेष्ठं न अमन्यत । अतः एव सः चित्रलेखायाः परिणयप्रस्तावं निराकृतवान् । चित्रलेखा तेन सह अटन्ती तस्य स्वभावम् अवगतवती । तदीयं निस्स्वार्थसेवाभावं दृष्ट्वा सा नितरां सन्तुष्टा । मया अपि तेन मार्गेण गन्तव्यम् इति निश्चित्य सा स्वस्य शारीरकं सौन्दर्यं जलजायै समर्प्य परोपकारत्यागरूपं विशिष्टम् आभरणं धृतवती । एतस्मात् जयन्तः अचिन्तयत् यत् चित्रलेखायाः सौन्दर्यं पूर्वापेक्षया अधिकं प्रवृद्धम् इति । अतः सः तां सहर्षं परिणेतुम् इष्टवान् । निस्स्वार्थसेवायाः फलरूपेण एव चित्रलेखया अपि पूर्वतनं रूपं प्राप्तम् । एतस्मात् स्पष्टं यत् निस्स्वार्थसेवा एव लोके श्रेष्ठा इति'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।








## वर्षस्य ३०० दिनेषु अपि उत्सवः

श्रीरङ्गस्थस्य रङ्गनाथस्वामिदेवस्थानस्य देवालयसमुहस्य वैशिष्ट्यं यत् तत्र वर्षस्य त्रिशताधिकेषु दिनेषु कोऽपि उत्सवः प्रचलति एव । एतस्य अपरम् अपि वैशिष्ट्यम् अस्ति । अत्र यत् गोपुरम् अस्ति तत् भारतस्थेषु गोपुरेषु एव अत्युन्नतम् । (२३५ पादात्मकं, १३अट्टात्मकं च) देशे स्थितेषु पूज्येषु पञ्चसु वैष्णवक्षेत्रेषु एतदपि अन्यतमम् । श्रीरङ्गं तिरुचिरापल्लितः १५ कि.मी.दूरे अस्ति । अत्र देवालयसमूहे रङ्गनाथस्य निमित्तं यथा, तथैव गणेशः, विष्णुः, दुर्गा, रामः, लक्ष्मणः, कृष्णः (वटपत्रशायी), हनूमान्, धन्वन्तरिः इत्यादीनां निमित्तम् अपि मन्दिराणि सन्ति । अत्र प्रच .त्सु उत्सवेषु वैकुण्ठैकादशी अपि प्रमुखा । सा च डिसेम्बर्मासे भविष्यति प्रायः ।

## आस्था शतकोटितमी बालिका

२००० तमवर्षस्य मेमासस्य एकादशे दिनाङ्के प्रातः ५.०० वादने देहलीचिकित्सालये आस्था जन्म प्राप्तवती । तस्याः जन्म भारतस्य इतिहासे उल्लेखार्हं जातम् । तस्याः जन्मतः भारतस्य जनसंख्या शतकोटिमिता (१,००,००,००,०००) जाता । विंशतितमस्य शतकस्य अन्ते भारतस्य जनसंख्या २,३०,००,००,००० मिता भवेत् इति तर्क्यते । एतस्य शतकस्य अन्ते प्रपञ्चस्य जनसंख्या ६,००,००,००,००० मिता भवेत् इति सम्भाव्यते । विश्वस्वास्थ्यसंस्था (W.H.O.) अभिप्रैति यत् २०४५ तमे वर्षे भारतम् अत्यधिकजनसंख्यायुक्तः देशः भवेत् इति ।





# पिशाचस्य साहाय्यम्

लक्ष्मीपुरे अन्नपूर्णा एकं लघु उपाहारगृहं चालयति स्म । एकस्मिन् दिने मध्यरात्र-पर्यन्तं सा यात्रिकाणां सेवायां रता आसीत् । सर्वाणि कार्याणि समाप्य यावत् सा शेतुम् उद्युक्ता तावता कश्चन वृद्धः तत्र उपस्थितः अभवत् ।

तदा अन्नपूर्णा - 'अहो ! मध्यरात्रः अतीतः चेदपि एते जनाः मम निद्रार्थम् अवकाशं न यच्छन्ति' इति स्वगतम् उक्त्वा तं वृद्धम् उद्दिश्य - ''आर्य ! भोजनम् आवश्यकं चेत् झटिति वदतु । पाकं सज्जीकरिष्यामि'' इति उक्तवती ।

तदा वृद्धः स्कन्धस्थं ग्रन्थिं भूमौ स्थापयन् अवदत् - ''भगवत्याः अन्नपूर्णायाः दयया बुभुक्षापिपासादयः सर्वथा न सन्ति मम । अहं रात्रौ शयनमात्राय अत्र आगतः अस्मि'' इति ।

एतत् श्रुत्वा अन्नपूर्णा आश्चर्येण पृष्टवती - ''बुभुक्षापिपासादयः न सन्ति इति उच्यते खलु भवता ? किं भवान् कोऽपि योगी ?'' इति ।

''आम् । अहं योगी इव । मम नाम रमेशः इति । अहम् एतस्य लक्ष्मीपुरस्यैव निवासी आसम् । यदा अहं तरुणः आसं तदा मम गृहं दग्धम् अभवत् । मम माता, पिता, पत्नी, भगिनी इत्यादयः अपि अग्निना दग्धाः जाताः । तदा विरक्तिं प्राप्य अहं ग्रामं परित्यक्तवान् । तत्काले भवत्याः माता सरस्वती उपाहारगृहं चालयति स्म । भवती अल्पवयस्का आसीत् तदा । भवत्याः नाम सम्यक् स्मरामि अहम् । ग्रामात् निर्गतः अहं तीर्थक्षेत्रेषु अटनं कृतवान् । कश्चन योगी मह्यं दिव्यदृष्टिम् इच्छाशक्तिं च दत्तवान् । तस्मात् मम पिपासाबुभुक्षादयः न भवन्ति । अहं ज्योतिषिकः अपि । भविष्ये किं भवेत् इति वक्तुं सामर्थ्यम् अपि अस्ति मम'' इति अवदत् सः वृद्धः ।

तदा अन्नपूर्णा क्षमायाचनपुरस्सरम् उक्त-



वती – ''मया तु भवन्तं सामान्यं मन्यमानया किमपि उक्तम् । कृपया क्षन्तव्या अहम् । मम भविष्ये किं भवेत् इति किं भवान् वक्तुं शक्नुयात् ?'' इति ।

योगी क्षणकालं नेत्रे निमील्य ध्यानं कृत्वा ततः अन्नपूर्णायाः मुखम् आश्चर्येण पश्यन् अवदत् – ''भद्रे ! वस्तुतः अपि भवती अन्नपूर्णा एव । अन्वर्थं नाम भवत्याः । भगवान् भवत्यां प्रसन्नः अस्ति । अहं मम दिव्यदृष्टिम् इच्छाशक्तिं च भवत्यै दत्त्वा काशीं गत्वा महादेवस्य सान्निध्ये मुक्तिं प्राप्स्यामि । श्वः प्रातः एव भवत्या ग्रामात् बहिः स्थितस्य अश्वत्थवृक्षस्य समीपम् आगन्तव्यम् । अहं ते शक्ती भवत्यै अर्पयिष्यामि'' इति ।

तदनन्तरदिने तौ तटाकसमीपं गतवन्तौ । अन्नपूर्णा तटाके स्नानं कृतवती । रमेशः स्वस्मिन् स्थितं शक्तिद्वयं तस्यै अर्पयित्वा अवदत् – ''कदाचिदपि एते शक्ती स्वार्थाय न उपयोक्तव्ये । यदि एतयोः दुरुपयोगः क्रियते तर्हि भवती मतिविकला भवेत् । सर्वदा स्मरतु एतत्'' इति ।

एतत् श्रुत्वा अन्नपूर्णा क्षणकालं स्तब्धा । 'या शक्तिः मम उपयोगाय न भवेत् तस्याः प्राप्त्या किं वा प्रयोजनम् ?' इति यावत् सा चिन्तयन्ती आसीत् तावता रमेशः ततः निर्गत्य अदृश्यतां गतः आसीत् ।

अनन्यगतिकतया अन्नपूर्णा 'शक्त्योः प्राप्त्या अपि मम लाभः तु नास्ति' इति चिन्तयन्ती स्वस्य उपाहारगृहं प्रति गतवती ।

तस्याः दत्तकः पुत्रः गोविन्दः लक्षितवान् यत् अन्नपूर्णायाः मुखे यथापूर्वम् उत्साहः न दृश्यते इति । कदाचित् सः मातरं सानुरोधम् एतस्य कारणं पृष्टवान् । तदा अन्नपूर्णा प्रवृत्तं सर्वम् उक्तवती । तयोः शक्त्योः दुरुपयोगात् अपायः भविष्यति इत्यपि तया उक्तम् ।

सर्वं श्रुत्वा गोविन्दः नितराम् आश्चर्यचकितः । एतम् एव विषयं चिन्तयन् सः तद्दिने अपराह्णे ग्रामात् बहिः स्थितस्य अश्वत्थवृक्षस्य अधः उपविष्टवान् । निरुद्देशेन इतस्ततः पश्यन् चिन्तयन् आसीत् सः । तावता कश्चन विलक्षणः आकारः तस्य पुरतः उपस्थितः । दर्शनात् एव गोविन्दः अवगतवान् यत् उपस्थितः कश्चन पिशाचः इति । तस्य शरीरे कम्पनम् उत्पन्नम् ।

पिशाचः हस्तसङ्केतेन 'भीतिः मास्तु' इति संसूच्य अवदत् – ''भवतः मात्रे यः शक्तिद्वयं दत्तवान् तस्य योगिनः रमेशस्य पिता अस्मि

अहम् । सबान्धवम् अग्निना दग्धः अहम् एवं पिशाचः जातः अस्मि । यदि अन्नपूर्णा स्वदिव्यदृष्ट्या भवतः भविष्ये किं भविष्यति इति जानीयात् तर्हि सः स्वार्थः भवति । दिव्यदृष्टेः दुरुपयोगश्च भवति । तथापि तस्यां स्थिता दिव्यदृष्टिः भवतः लाभाय यथा स्यात् तथा साहाय्यं कर्तुम् अहं सिद्धः अस्मि'' इति ।

एतत् श्रुत्वा गोविन्दः आश्चर्येण अपृच्छत् – ''एतत् कथं सम्भवेत् ? मम मातरि स्थिता दिव्यशक्तिः मम उपकाराय कथं भवेत् ?'' इति ।

तदा पिशाचः अवदत्– ''अहं तु मरणं प्राप्तवान् जनः । यदि सा मम भविष्यस्य विषयं ज्ञात्वा वदेत् तर्हि तत्र स्वार्थलेपः तु न भवति । अतः सा दिव्यदृष्ट्या मम भविष्यं कीदृशम् इति ज्ञात्वा वदतु । यदा तत् मया ज्ञास्यते तदा अहं भवतः साहाय्यं करिष्यामि'' इति ।

गोविन्दः रमेशस्य पितुः प्रस्तावम् अङ्गीकृत्य ततः निर्गत्य गृहं गत्वा मातरं प्रवृत्तं सर्वम् अवदत् ।

स्वस्मिन् स्थितायाः शक्तेः परीक्षणाय समयः उपस्थितः इत्यतः अन्नपूर्णा नितरां सन्तुष्टा । सा दिव्यदृष्ट्या पिशाचस्य भविष्यं ज्ञातवती । तत्र पिशाचजन्मतः विमुक्तिः तदा दृष्टा । तस्याः कारणं भवति स्म अन्नपूर्णायाः शक्तिः एव ।

'एतदर्थं मम शक्तेः उपयोगः किं स्वार्थाय न भवेत् ?' इति चिन्तयन्ती अन्नपूर्णा सन्देहनिवारणाय अश्वत्थवृक्षस्य समीपं गतवती गोविन्देन सह ।



तौ दृष्ट्वा पिशाचः वृक्षात् अवतीर्य अन्नपूर्णां नमस्कृतवान् । अन्नपूर्णा दिव्यदृष्ट्या दृष्टां मोक्षप्राप्तिवार्तां तम् उक्तवती, स्वस्य सन्देहं पृष्टवती च ।

तदा पिशाचः - ''अहं रमेशस्य पिता अस्मि इति भवती जानाति एव । रमेशस्य भगिनी मम पुत्री गिरिजा अपि अग्निदाहेन क्षतिग्रस्ता जाता । सा इदानीं मम भ्रातुः शिवराजस्य गृहे वर्धमाना अस्ति । प्राप्त-वयस्का जाता अस्ति सा । किन्तु सा मूका अस्ति । भवत्याः शक्तेः कारणतः सा सम्भाषणसमर्था भवतु । ततः भवती मम भ्रातरं वदतु यत् सा गोविन्दं परिणयेत् इति पिशाचस्य मम इच्छा इति । शिवराजः धनिकः । अतः विवाहसमये सः प्रभूतां वरदक्षिणां दास्यति । तस्मात् भवत्याः पुत्रस्य आर्थिकस्थितिः उत्तमा भविष्यति । मम च पिशाचजन्मतः मोक्षः भविष्यति । अत्र स्वार्थस्य अंशः कोऽपि नास्ति । प्रत्युत पुण्यसम्पादनम् एव भविष्यति'' इति उक्त्वा ततः अदृश्यतां गतः ।

ततः अन्नपूर्णा गोविन्देन सह शिवराजस्य गृहं गतवती । स्वस्य दिव्यशक्त्या गिरिजां सम्भाषणसमर्थां कृतवती च ।

अन्नपूर्णाद्वारा सर्वं श्रुतवान् शिवराजः स्वस्य भ्रातुः पुत्रीं गिरिजां गोविन्दाय दातुं सहर्षम् अङ्गीकृतवान् । गोविन्दगिरिजयोः विवाहः प्रवृत्तः । तयो कृते उत्तमां कृषिभूमिम् उपायनीकृतवान् शिवराजः ।

अन्नपूर्णायाः दिव्यशक्तिविषयः समीपस्थेषु ग्रामेषु अपि प्रसृतः । अतः बहवः स्व-समस्यायाः निवारणाय तस्याः समीपम् आगताः । सा प्रतिफलं तु कस्मात् अपि न स्वीकरोति स्म । स्वार्थः न साधनीयः इति नियमः खलु आसीत् ? किन्तु उपकृतान् चिकित्सालय-धर्मशालादीनां निर्माणाय प्रेरयति स्म सा । सामान्याः यथाशक्ति धनं यच्छन्ति स्म तादृशाय कार्याय ।

एवम् उपाहारगृहीया अन्नपूर्णा 'योगिनी अन्नपूर्णा' इति ख्याता जाता । तया उपकृताः विविधानि समाजकल्याणकार्याणि कुर्वन्ति स्म ।

एवं समाजोपकारकेषु कार्येषु जनान् प्रेरयन्ती सा दीर्घकालं सुखेन जीवितवती ।



# वार्ताविशेषः

## जनप्रियाः मूल्याङ्काः



पत्रालयविभागेन २००२तमे वर्षे प्रकाशितानां मूल्याङ्कानां विषये एकं सर्वेक्षणं कृतं गते वर्षे । रिलायन्स्‌संस्थानां प्रमुखस्य श्रीरूभाय् अम्बानीवर्यस्य चित्रम् अतिजनप्रियम् इति ततः ज्ञातम् । जनप्रियतायां द्वितीयं स्थानं कथक्कलीनृत्यस्य, यच्च भारतजपान्-स्नेहद्योतकसरणेः अङ्गम् अस्ति । जपानीयं नृत्यं काबुकि कथक्कलीसाम्यं भजते इत्येतत् अत्र स्मर्तुं योग्यम् । एवरेस्ट् शिखरे भारतसैन्येन यः विजयः प्राप्तः तस्य स्मारकरूपेण प्रकाशितः मूल्याङ्कः तृतीयं स्थानम् अवाप्नोत् ।

## विद्यार्जने न वयः विघ्नाय

किमानि एडाङ्ग मरुग्यू कीन्यादेशस्य एल्डोरेनगरे स्थितस्य विद्यालयस्य प्रथमकक्ष्यायाः विद्यार्थी । किम् अत्र आश्चर्यम् इति ? स तु भवति ८४ वर्षीयः ! दण्डसाहाय्येनैव सः गच्छति विद्यालयम् । तस्य सहाध्यायिनस्तु षट्सप्तवर्षीयाः । स्वातन्त्र्यसङ्ग्रामस्य योद्धॄणां कृते यत् निवृत्तिवेतनं दीयते तत् प्राप्नुवन् अस्ति सः । किन्तु तस्य धनस्य गणनायाम् असमर्थः सः ! पवित्रः मतग्रन्थः बैबल् पठितुं न शक्यते इत्यपि अस्ति तस्य खेदः । २००२ तमे वर्षे कीन्या-सर्वकारेण घोषितं यत् प्राथमिकः विद्याभ्यासः निश्शुल्कः स्यात् इति । अतः किमानिः विद्यालयं प्रति गमने मतिं कृतवान् । तस्य ३२ पौत्रदौहित्रादयः सन्ति । तेषु केचन तदीये एव विद्यालये पठन्ति । किन्तु ते विद्याभ्यासदृष्ट्या ज्येष्ठाः । यतः ते अग्रिमकक्ष्यासु पठन्ति ।



# असमराज्यीया जानपदकथा

## राक्षसं जितवन्तौ विकलाङ्गौ

नगरात् सुदूरे स्थिते ग्रामे उभौ सुहृदौ निवसतः स्म । तयोः नाम मैत्रः पुखनः चेति । तयोः मैत्री जाता आसीत् केनचित् विशिष्टेन कारणेन । मैत्रः जन्मना अन्धः, पुखनश्च जन्मना पङ्गुः । तौ प्रतिदिनं समययापनाय वटवृक्षस्य अधः मिलतः स्म, जल्पनं च कुरुतः स्म ।

बिहुपर्वावसरे समग्रः ग्रामः विविधेषु मनोरञ्जनकार्यक्रमेषु मग्नः भवति स्म । किन्तु दौर्भाग्यवशात् स्वस्य अङ्गवैकल्यस्य हेतोः मैत्रः पुखनः च तादृशे कस्मिंश्चित् अपि कार्यक्रमे भागं वोढुम् असमर्थौ भवतः स्म । अतः बहुधा विचिन्त्य तौ एकां योजनां कृतवन्तौ । मैत्रः स्वस्य स्कन्धाभ्यां पुखनम् अवहत् । मैत्रः दृढकायः आसीत्, पुखनश्च कृशः अल्पभारः च । अतः पुखनस्य वहने मैत्रस्य न कोऽपि क्लेशः जातः । तौ मेलास्थलं गतवन्तौ । आत्मना यद्यत् दृष्टं तत्सर्वं मैत्रम् उद्दिश्य विवृतवान् पुखनः । एतस्मात् मैत्रः अपि आनन्दितः जातः ।



तादृशी मेला सर्वदा न भवति खलु ? अतः तौ निर्णीतवन्तौ यत् मेलायाः दर्शनार्थं येन क्रमेण गतं तेनैव क्रमेण समीपस्थाः ग्रामादयः अपि द्रष्टव्याः इति । ततः पुखनः मैत्रस्य स्कन्धौ आरूढवान् । यत् स्थलम् इतः पूर्वं न दृष्टं तादृशानि स्थलानि तौ दृष्टवन्तौ । मां वहता मैत्रेण प्रयाणं क्रियते इत्यतः सः श्रान्तः स्यात् इति विचिन्त्य पुखनः सूचितवान् यत् विश्रान्त्यै वटवृक्षसमीपं गच्छाव इति ।

ततः तौ वटवृक्षसमीपं गतवन्तौ । विश्रान्तिसमये मैत्रः अवदत् – ''कार्यं विना एतस्मिन् ग्रामे आवां कियत्कालं स्थातुं शक्नुयाव ? इतः कुत्रापि गत्वा किमपि कार्यं करवाव जीविकानिर्वहणार्थम्'' इति ।

''भवतु नाम । मम तु आक्षेपः नास्ति तत्र । किन्तु मम तु भाति यत् ग्रामेषु अटनमिव दूरगमनं न सुकरम् । तत्रापि नगरं प्रति गमनं तु....''

पुखनस्य वाक्यस्य समाप्तितः पूर्वम् एव मैत्रः अवदत् – ''दूरगमनं क्लेशाय इति भवान् मा चिन्तयतु । यदि श्रान्तिः भवति तर्हि मध्ये मध्ये विश्रान्तिः स्वीकर्तुं शक्या एव । अतः नगरं प्रति गमनम् एव चिन्तयाव'' इति ।

अनन्तरदिने तौ मन्दिरं गत्वा 'प्रयाणं निर्विघ्नं

भवतु' इति देवं सम्प्रार्थ्य साहसयात्राम् आरब्धवन्तौ । प्रयाणसमये पुखनः मार्गम् उभयतः यानि दृश्यानि दृश्यन्ते स्म तानि वर्णयति स्म निरन्तरम् । अतः तं स्कन्धाभ्यां वहन् अपि भारभावं न अनुभूतवान् मैत्रः ।

एवं गमनसमये कस्यचित् वृक्षस्य अधः लघुः दुन्दुभिः पुखनेन दृष्टः । 'एतम् अपि नयाव' इति असूचयत् मैत्रः । ततः तं स्वीकृत्य तौ प्रयाणम् अनुवर्तितवन्तौ ।

किञ्चिद्दूरं गमनानन्तरं तौ एकं कूपं प्राप्तवन्तौ । कूपात् जलम् उद्धृत्य पीत्वा तौ पिपासां निवारितवन्तौ । कूपस्य पार्श्वे कश्चन रज्जुखण्डः पतितः आसीत् । पुखनः तं रज्जुखण्डं स्वीकृत्य तेन लघुदुन्दुभिं बद्ध्वा तं लघुदुन्दुभिं स्वस्य स्कन्धे आरोपितवान् । ताभ्यां पुनरपि किञ्चिद्दूरं गतम् । तदा वृक्षैः परिवृतः कश्चन कासारः प्राप्तः । ताभ्यां निर्णीतं यत् कासारतीरे तृणानाम् उपरि उपविश्य विश्रान्तिसुखम् अनुभोक्तव्यम् इति ।

ताभ्यां वृक्षस्य अधः उपविष्टम् । तावता कश्चन कूर्मः तयोः समीपम् आगतः । एतत् दृष्टवान् पुखनः कूर्मस्य आगमनं मैत्रम् उक्त्वा अपृच्छत् – "किम् एतम् आत्मना सह नयाव आवाम् ?" इति ।

"एतस्य नयनात् अस्माकं किं वा प्रयोजनम् ?" इति अपृच्छत् मैत्रः ।

"मम तु भाति यत् एतस्य नयनात् कोऽपि लाभः स्यादेव इति । एषः अस्मत्समीपम् आगच्छति यत् तत् तु स्यात् दैवसङ्कल्पस्य अनुगुणम् । अन्यच्च, एषः कूर्मः आवयोः मैत्रीम् इच्छन् अत्र आगतः इति भाति" इति अवदत् पुखनः ।

मैत्रः कूर्मस्य नयनम् अङ्गीकृतवान् । ततः पुखनः रज्ज्वाः अपरेण अन्तेन कूर्मं बद्ध्वा स्वस्य स्कन्धे आरोपितवान् । ततः तौ अग्रे प्रस्थित-वन्तौ ।

रात्रिः आसन्ना । निरन्तरप्रयाणात् मैत्रः श्रान्तः आसीत् । अतः सः पुखनम् अवदत् – "एतां रात्रिं यापयितुं प्रशस्तं स्थलं किमपि अन्वेष्टव्यम्" इति ।

ततः पुखनः मैत्रस्य स्कन्धस्य उपरि जानुभ्याम् उपविश्य कण्ठम् उन्नमय्य परितः अपश्यत् । अनतिदूरे एव तेन कश्चन दीप-प्रकाशः दृष्टः । 'मित्र ! इतः किञ्चिद्दूरे किञ्चन



गृहम् अस्ति इति भाति । आवां तत्र गच्छाव" इति अवदत् पुखनः ।

तौ तत् गृहं प्राप्तवन्तौ । गृहे कोऽपि न दृष्टः । एकस्मात् प्रकोष्ठात् उच्चैः निद्राजनितः शब्दः श्रूयते स्म । कश्चन घोराकारः तत्र शयितः दृष्टः ताभ्याम् । तौ तु नितरां श्रान्तौ आस्ताम् । सर्वत्र अन्धकारः प्रसृतः आसीत् अपि । अन्यस्य स्थलस्य अन्वेषणं नितरां दुष्करम् आसीत् । अतः अत्रैव अद्य शयनीयम् इति तौ निश्चितवन्तौ ।

सः घोराकारः यत्र शयनं कृतवान् आसीत् सः प्रकोष्ठः बहिर्भागे कीलयितुं शक्यः

आसीत् । अतः तौ तं प्रकोष्ठं बहिर्भागतः कीलितवन्तौ । अपरं प्रकोष्ठं प्रविश्य तम् अन्तर्भागतः कीलितवन्तौ । तस्मिन् प्रकोष्ठे विविधाः आहारपदार्थाः आसन् । तान् सन्तोषेण तौ खादितवन्तौ । ततः सुखेन शयितवन्तौ च ।





पुखनः तदा तदा शय्यायाम् उपविश्य वातायनद्वारा पश्यति स्म – पार्श्वप्रकोष्ठे किमपि प्रचलति वा इति ।

रज्ज्वाः एकस्मिन् पार्श्वे लघुदुन्दुभिः अपर-पार्श्वे कूर्मः च बद्धौ आस्तां खलु ? कूर्मः किञ्चित् सञ्चारम् आरब्धवान् । अतः लघुदुन्दुभिः भूमौ अपतत् । तस्मात् शब्दः उद्भूतः । एतेन तस्य घोराकारस्य राक्षसस्य जागरणं जातम् । सः राक्षसः पार्श्वप्रकोष्ठे किं प्रवर्तते इति ज्ञातुं बहिः गन्तुम् उद्युक्तः । किन्तु तेन ज्ञातं – प्रकोष्ठः बहिर्भागतः कीलितः अस्ति इति । ''कः सः दुष्टः मम गृहं प्रविश्य मदीयं प्रकोष्ठम् एव कीलितवान् ? कस्य एतत् दुस्साहसम् ?'' इति क्रोधेन आक्रोशन् – ''भो भोः ! प्रकोष्ठम् उद्घाटयतु रे'' इति पुनः पुनः द्वारं ताडयन् उच्चैः उक्तवान् ।

किञ्चित्कालं यावत् पार्श्वप्रकोष्ठतः कोऽपि शब्दः न श्रुतः । मैत्रः पुखनस्य कर्णे अवदत् – ''तेन यावदुच्चैः शब्दः कृतः ततोऽपि उच्चैः शब्दः करणीयः आवाभ्याम्'' इति ।

ततः पुखनः लघुदुन्दुभिं निरन्तरं वादितवान् । स च शब्दः राक्षसेन कृतं द्वारताडनशब्दम् अपि अतिशेते स्म । राक्षसः अचिन्तयत् – 'पार्श्वप्रकोष्ठे मत्तः अपि बलवत्तरः अन्यः राक्षसः अस्ति इति भाति' इति । तथापि सः आत्मनि धैर्यं प्रपूर्य अपृच्छत् उच्चस्वरेण – ''कः भवान् तत्र ?'' इति ।

तदा मैत्रः गम्भीरस्वरेण अवदत् – ''आदौ वदतु भवान् कः इति'' इति ।

''अहं महाराक्षसः अस्मि'' इति अवदत् राक्षसः ।

''अहं तु राक्षसराजः अस्मि'' इति अत्युच्चस्वरेण अवदत् मैत्रः ।

''असत्यवादी भवान् । भवान् राक्षसराजः इत्यत्र किं वा प्रमाणम् ?'' इति अपृच्छत् राक्षसः ।

''स्वस्य महाराक्षसत्वम् आदौ प्रमाणीकरोतु भवान्'' इति उक्तवान् मैत्रः ।

राक्षसः स्वस्य शिरसः एकं केशं निष्कास्य वातायनद्वारा अपरस्मिन् प्रकोष्ठे अपातयत् । स च केशः 'धड्' इति शब्देन सह भूमौ अपतत् । ''मम केशस्य सामर्थ्यं दृष्टं चेदेव ज्ञायते यत् अहं कीदृशः बलवान् महाराक्षसः इति'' इति सगर्वम् अवदत् राक्षसः ।

मैत्रः पुखनं स्वस्य स्कन्धे आरोप्य असूचयत् यत् रज्जुं पार्श्वप्रकोष्ठे क्षिपतु इति । पुखनः तथैव अकरोत् । ततः मैत्रः अवदत् – ''मम केशस्य स्थौल्यं पश्यतु तावत् । तेन अहं भवतः हस्तौ पादौ च बन्धुम् अपि शक्नोमि'' इति ।

एतत् दृष्ट्वा श्रुत्वा च राक्षसः भीतः । स्वस्य श्रेष्ठता कथं निरूपणीया इति तेन न ज्ञातम् ।

किञ्चित् विचिन्त्य सः स्वस्य केशेभ्यः एकं यूकं निष्कास्य पार्श्वप्रकोष्ठे क्षिप्त्वा अवदत् – ''पश्यतु मम केशस्थं यूकम् । एषः यूकः मण्डूकः इव अस्ति । एतस्य दर्शनात् एव स्पष्टं जातं स्यात् यत् अहम् एव बलवान् इति'' इति ।

अग्रे किं करणीयम् इति मैत्रः यावत् चिन्तयन् आसीत् तावता पुखनस्य मनसि कश्चन उपायः स्फुरितः । सः स्वसमीपस्थं कूर्मं स्मृतवान् । तं पार्श्वप्रकोष्ठे क्षिप्त्वा मैत्रः अवदत् – ''पश्यतु मम यूकम् । भवतः यूकम् अहं पादेन विमर्दितवान् अस्मि । तथैव किं भवान् मम केशस्थं यूकं पादेन मारयितुं शक्नुयात् ? भवान् न शक्नोति इति मम विश्वासः अस्ति'' इति ।

एतत् श्रुत्वा क्रुद्धः राक्षसः कूर्मं पादेन विमर्दितवान् । कूर्मस्य शल्कं दृढम् आसीत् खलु ? अतः तत् न भग्नम् । तस्मात् सः राक्षसः अचिन्तयत् यत् पार्श्वप्रकोष्ठस्थः राक्षसः मत्तोऽपि बलवत्तरः इति ।

'यदि अहं पार्श्वप्रकोष्ठस्थस्य विरोधं सम्पादयेयं तर्हि मम मरणं सम्भवेत् । एतत् न युक्तम्' इति विचिन्त्य सः अवदत् – ''अस्तु नाम । भवतः बलवत्तरत्वम् अङ्गीक्रियते मया । भवान् तस्मात् प्रकोष्ठात् बहिः आगच्छतु । आवाम् अत्रैव मैत्रीभावेन वसाव'' इति ।

''किम् उक्तं भवता ? उभौ राक्षसौ एकत्र वासं कर्तुं न शक्नुतः । भवतः यूकः एव मधुरः । एवं तर्हि भवतः मांसम् इतोऽपि मधुरं स्यात् । अहं भवन्तं मारयित्वा खादिष्यामि । यदि भवान् इतः न निर्गच्छति तर्हि भवतः मांसेन मम भोजनं निर्वर्तयिष्यामि । किम् अहं बहिः आगच्छेयम् ?'' इति उच्चस्वरेण अपृच्छत् मैत्रः ।

''मास्तु । अहम् एव इतः गमिष्यामि'' इति अवदत् राक्षसः । अनन्तरक्षणे प्रकोष्ठस्य कीलनस्य अपसारणशब्दः श्रुतः । राक्षसः – ''अहो, दैवेन अहं रक्षितः'' इति स्वगतं वदन् ततः पलायितवान् ।

प्रकोष्ठतः बहिः आगत्य मैत्रः पुखनः च राक्षसस्य निर्गमनं दृढीकृत्य तदीयं प्रकोष्ठं प्रविष्टवन्तौ । तत्र यत् ऐश्वर्यम् आसीत् तत् दृष्ट्वा तौ नितराम् आश्चर्यचकितौ । सुवर्ण-रजतमयानि आभरणानि, रत्नादीनि च यथाशक्ति स्वीकृतवन्तौ तौ । राक्षसस्य शय्यायाः पार्श्वे एका कज्जलकूपी दृष्टा पुखनेन । सः मैत्रम् अवदत् – ''एतं कज्जलं स्वीकृत्य तेन नेत्रे लिम्पतु'' इति ।

मैत्रः तथैव अकरोत् । तस्मात् सः सर्वमपि स्पष्टतया द्रष्टुं समर्थः जातः । मैत्रः तस्मिन् प्रकोष्ठे एकां तैलकूपीम् अपश्यत् । सः पुखनम् अवदत् – ''एतेन भवान् स्वपादौ लिम्पतु'' इति । पुखनः तथैव अकरोत् । तस्मात् तस्य पङ्गुता अपगता ।

ततः तौ स्वग्रामं प्रति आगतवन्तौ । ग्रामम् आगतौ तौ एकं विशालं गृहं निर्माय तत्र सुखेन वासं कृतवन्तौ ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५० पारितोषिकत्वेन



**अधस्तनकथा पठ्यताम् -**

मधुमलै-अरण्यं पूर्वम् आखेटासक्तानां प्रियम् अरण्यम् आसीत् । तत्र बहुकालं यावत् स्वच्छन्दतया मृगया प्रवृत्ता इत्यतः वन्यपशुसन्ततेः नाशदशा उपस्थिता इव । अतः सर्वकारेण स्वच्छन्दमृगयायाः निषेधः कृतः । अनुमतिपत्रं प्राप्यैव मृगया करणीया इति नियमः अपि कृतः ।

कदाचित् विजयः मनोहरः च तत्र मृगयारतौ आस्ताम् । तदा अधिकारिणः अनुमतिपत्रस्य परीक्षणाय अकस्मात् तत्र उपस्थिताः । तान् दृष्ट्वा तौ सुहृदौ क्षणकालं परस्परं मुखं दृष्टवन्तौ । क्षणानन्तरं विजयः ततः धावनम् आरब्धवान् । अधिकारिणः अपि धावन्तः तम् अनुसृतवन्तः । अन्ते तैः सः कथमपि गृहीतः । सः स्वस्य कोषात् अनुमतिपत्रं निष्कास्य तेभ्यः दर्शितवान् । तत् यथानियमम् एव प्राप्तम् आसीत् तेन । अतः आश्चर्यम् अनुभवन्तः अधिकारिणः पृष्टवन्तः - ''अनुमतिपत्रे सत्यपि किमर्थं धावितं भवता ?'' इति ।

- विजयः किम् उत्तरं दत्तवान् स्यात् ?
- विजयस्य धावनस्य किं वा कारणम् ?
- तस्य उत्तरं श्रुतवताम् अधिकारिणां प्रतिस्पन्दः कः ?

**स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -**

**अन्तिमः दिनाङ्कः - ३१, अगस्ट् २००४**

नाम ---------------------- वयः --------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------------------- कक्ष्या ----------

गृहसङ्केतः ------------------------------------------------

------------------------------------------------------------

------------------------------ Pincode ---------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097

# THE ADVENTURES OF G-man



## खतरनाक टापू पर पिकनिक
## भाग III

प्रस्तुतकर्ता




POWER SUPPLY



visit: www.parleproducts.com



# विद्याधिकारी

चन्द्रसेनः काञ्चनपुरस्य राजा । पितुः अकालिकमरणस्य अनन्तरं सः बाल्ये एव सिंहासनम् अधिरूढवान् । योग्यं मार्गदर्शनं तेन प्राप्तम् इत्यतः सः दक्षः राजा जातः । युवकस्य शिक्षितस्य तस्य मनसि प्रबला इच्छा आसीत् यत् शिक्षणक्षेत्रे योग्यं परिवर्तनं करणीयम् इति ।

अतः सः मन्त्रिणः, पण्डिताः, शिक्षाविदः इत्यादीन् मेलितवान् । सर्वे सम्भूय निर्णीतवन्तः यत् राज्ये एकरूपं शिक्षणं स्यात् इति । यस्मिन् विषये विद्यार्थी रुचिं वहति तस्य विषयस्य अध्ययनाय सः अनुमतः भवेत् इत्यपि तत्र निर्णीतम् । राजनीतिः पौरनीतिः च अवश्यं बोधनीयः इत्यपि निर्णयः जातः । आपत्तिकाले आत्मरक्षणाय युवकैः शरीरसामर्थ्यम् अपेक्ष्यते । तस्मात् व्यायामस्य शस्त्रविद्यायाः चापि शिक्षणम् अपि अनिवार्यं स्यात् इत्यपि निर्णीतम् ।

एतस्य सर्वस्य क्रियान्वयनं कर्तुं कश्चन समर्थः विद्याधिकारी भवेत् इति ऐकमत्येन तत्र निर्णीतम् । विद्याधिकारिणः अध्यक्षतायां समग्रे राज्ये गुरुकुलेषु योग्यं शिक्षणं भवेत् इति तत्र निश्चितम् ।

विद्याधिकारिपदं सामान्यं तु न । अतः महाविद्वान् उचितानुचितविवेकी एव तत् पदम् अलङ्कर्तुम् अर्हति । तादृशस्य चयनस्य अधिकारः राजगुरवे महेन्द्रशर्मणे प्रदत्तः ।

एतत् पदं तु उन्नतम् । उत्तमं वेतनम् अपि भवति । राज्ञः मेलनाय पौनःपुन्येन अवसराः अपि प्राप्यन्ते । अतः बहवः तरुणाः एतस्य पदस्य प्राप्तये अहमहमिकया प्रयासम् आरब्धवन्तः ।

महेन्द्रशर्मा तु अर्हस्य चयने दक्षः एव । अतः तेन क्रियमाणायां व्यक्तित्वपरीक्षायाम् एव बहवः अनुत्तीर्णाः भवन्ति स्म । तत्र ये चिताः ते अनन्तरस्तरीयायां मौखिकपरीक्षायाम् असफलाः भवन्ति स्म । तस्मात्



एकोऽपि चितः न जातः ।

काञ्चनपुरे एव सुन्दरवननामके ग्रामे इन्द्रदत्तः नाम कश्चन युवकः निवसति स्म । सः शास्त्रनिपुणः आसीत् । बाल्ये एव अध्ययनाय काशीं गतः सः महत् पाण्डित्यं सम्पादितवान् आसीत् । मया यत् अधीतं तत् अन्ये अध्यापनीयाः इति तस्य प्रबला इच्छा आसीत् । तेनापि विद्याधिकारिपदस्य वार्ता श्रुता । अतः सः अपि राजधानीं प्रति गतः ।

सः कस्याञ्चित् धर्मशालायां वसन् दिनद्वयं यावत् राजधान्याम् अटितवान् । तस्मात् तेन विविधाः विषयाः सङ्गृहीताः । योग्यं शिक्षणं दातुं समर्थाः तरुणाः कति जनाः उद्योगम् अलभमानाः खेदेन सन्ति, कति च जनाः विद्याभ्यासे आसक्ताः सन्तोऽपि योग्यायाः व्यवस्थायाः अभावतः विद्याभ्यासं कर्तुम् असमर्थाः सन्ति इत्यादिकं तेन ज्ञातम् ।

तृतीये दिने सः राजगुरुणा मेलितुं गतः । तावता तु राजगुरोः परीक्षास्तरद्वये अपि सेनापतेः पुत्रः दुर्जयः, कोषाधिकारिणः पुत्रः विक्रमः च जयं प्राप्तवन्तौ आस्ताम् ।

सामान्यवार्तालापेन महेन्द्रशर्मा अवगतवान् यत् एषः इन्द्रदत्तः अर्हः एव इति । इन्द्रदत्ततः सम्बद्धं सर्वं विवरणं प्राप्य महेन्द्रशर्मा अपृच्छत् – ''दिनद्वयात् पूर्वम् एव भवता राजधानीं प्रति आगतं खलु । आगमनसमनन्तरम् एव अत्र किमर्थं न आगतम् ? कुतो वा विलम्बः कृतः ?'' इति ।

''मया यत् पदम् इष्यते तत् महत्त्वपूर्णम् अस्ति । अतः अत्र आगतेन मया तत्क्षेत्र-सम्बद्धं विवरणम् आदौ सङ्गृहीतम् । अस्माकं राजधान्यां नव विद्यालयाः सन्ति । देशे च उपशताः विद्यालयाः सन्ति । किन्तु अस्माकं देशे विद्याम् अपेक्षमाणानां सङ्ख्या महती अस्ति । विद्याम् अपेक्षमाणानां सङ्ख्यायाः अनुगुणं विद्यालयाः सर्वथा न्यूनाः । अन्यच्च, विद्या अपि गुरोः अभिरुच्यनुगुणं दीयमाना अस्ति अद्य । मम तु भाति यत् विद्यार्थिनाम् अभिरुचेः अनुगुणं विद्यायाः दानस्य व्यवस्था स्यात् इति । अतः विद्यालयव्यवस्थायाम् अपि परिवर्तनम् अपेक्ष्यते'' इति उक्तवान् इन्द्रदत्तः ।

महेन्द्रशर्मा अवगतवान् यत् इन्द्रदत्तः विद्याधिकारिपदस्य उत्तरदायित्वं सम्यक् अवगतवान् अस्ति इति ।

''एतत् विद्याधिकारिपदं प्राप्यते एव इति कथं निर्णीतं भवता ?'' इति अपृच्छत् महेन्द्रशर्मा ।

''यस्य अर्हता भवति तेन प्राप्यते एव पदम् । अहं चिन्तयामि यत् मम तादृशी अर्हता अस्ति इति । अतः एव अहम् अत्र आगतः । अन्यच्च, मानवेन सदा आशावादिना भवितव्यम् । यदि आशा एव लुप्येत तर्हि भविष्यं शून्यं स्यात्'' इति उक्तवान् इन्द्रदत्तः ।

''एतत् पदं यदि भवता न प्राप्येत ...?'' इति अपृच्छत् महेन्द्रशर्मा ।

''न प्राप्येत चेदपि न कापि चिन्ता मम । कुत्रचित् गत्वा मम कल्पनानुगुणं गुरुकुलं चालयिष्यामि अहम् । एषः उद्योगः यदि प्राप्येत तर्हि महतीं कल्पनां, योजनां च साकारीकर्तुं शक्नुयाम्'' इति अवदत् इन्द्रदत्तः ।

एतेन सन्तुष्टः महेन्द्रशर्मा दुर्जयं विक्रमं चापि आहूय अपृच्छत् - ''महता वेगेन गच्छति मनः । वेगगामिषु द्वितीयं स्थानं कस्य ?'' इति ।

''वायोः'' इति अवदत् दुर्जयः ।

''न वायोः, अपि तु अग्नेः'' इति अवदत् विक्रमः ।

''अहं तु चिन्तयामि - वेगगामिषु द्वितीयं स्थानं वार्तायाः इति । सा क्वचित् वायोः अग्नितः च अधिकवेगेन सञ्चरति । अहं देशस्य कोणे वसामि । तथापि पदस्य वार्ता मया अल्पेन एव कालेन प्राप्ता । एवं वार्ता



केन वेगेन सञ्चरति इत्येव न ज्ञायते'' इति अवदत् इन्द्रदत्तः ।

''मानवं कः दहति ?'' इति अपृच्छत् महेन्द्रशर्मा ।

''अग्निः एव मानवं दहति'' इति दुर्जयः अवदत् ।

''अग्निः न केवलं मानवम्, अपि तु सर्वाणि वस्तूनि अपि दहति'' इति अवदत् विक्रमः ।

''मिथ्याकलङ्कः मानवम् आधिक्येन दहति । अग्निः बाह्यं दहति चेत् मिथ्या-कलङ्कः तु अन्तः एव दहति'' इति अवदत् इन्द्रदत्तः ।

''कः मरणकारकः ?'' - महेन्द्रशर्मा अपृच्छत् ।

''अनारोग्यम्'' इति अवदत् दुर्जयः । ''चिन्ता'' इति अवदत् विक्रमः ।

''अनारोग्यं चिन्ता च मरणं कल्पयतः इति तु सत्यम् । किन्तु तयोः मूलम् अस्ति क्रोधः । सः विवेकं नाशयति । ततः मतिः भ्रश्यति । मतिभ्रष्टः नश्यति । एवं क्रोधः एव सर्वस्य कारणम्'' इति अवदत् इन्द्रदत्तः ।

''इन्द्रदत्त ! भवतः एषा उत्तरकथनरीतिः उत्तमा अस्ति'' इति उक्त्वा महेन्द्रशर्मा अपृच्छत् - ''यदि भवता विद्याधिकारिपदं प्राप्येत तर्हि कथं व्यवहरिष्यति भवान् ?'' इति ।

''ज्येष्ठानाम् अभिप्रायं स्वीकरोमि आदौ । ये शिक्षिताः युवकाः युवतयः च सन्ति तेषां कृते विद्यासंस्थायाः आरम्भाय अवकाशं कल्पयिष्यामि । भवादृशानां मार्गदर्शनं स्वीकृत्य योजनां रचयिष्यामि । आसक्ताः सर्वे यथा अध्ययनाय अवकाशं प्राप्नुयुः तथा करिष्यामि'' इति उत्साहेन अवदत् इन्द्रदत्तः ।

एतदनन्तरं सप्ताहाभ्यन्तरे एव इन्द्रदत्तः विद्याधिकारित्वेन नियुक्तः जातः । महेन्द्र-शर्मा इन्द्रदत्ते यं विश्वासं स्थापितवान् सः व्यर्थः न जातः । अल्पे एव काले इन्द्रदत्तः उत्तमः विद्याधिकारी जातः ।

एवं राज्ञः चन्द्रसेनस्य शासनकाले काञ्चनपुरं विद्यार्थिनां कृते कल्पवृक्षः इव जातः ।



# राजकुमारीं स्पृष्टवान् दलपतिः

अद्य यस्य राजधानी बीजिङ्ग् अस्ति, तादृशः चीनदेशः पूर्वं न आसीत् । तत्समये प्रवृत्ता घटना एषा । तदा चीनदेशः लघुभिः राज्यैः विभक्तः आसीत् । तेषु अन्यतमस्य नाम 'चु' इति ।

२६०० वर्षेभ्यः पूर्वं 'चु'देशः झुवाङ्ग-नामकेन राज्ञा परिपाल्यते स्म । तानि लघु-राज्यानि बहुधा परस्परं युध्यन्ते स्म । कदाचित् कस्मिंश्चित् युद्धे राजा झुवाङ्गः जयं प्राप्तवान् । जयस्य कारणीभूतानां दलपतीनां सम्माननाय सः कञ्चित् महान्तं समारम्भम् आयोजितवान् । मन्त्रिणः, प्रमुखाः अधि-कारिणः चापि तस्मै समारम्भाय निमन्त्रिताः आसन् ।



कस्मिंश्चित् महति सभाङ्गणे सः समारम्भः आयोजितः आसीत् । सङ्गीतकार्यक्रमः नृत्य-कार्यक्रमश्चापि परिकल्पितः आसीत् तत्र । निमन्त्रितानां कृते उत्तमं भोजनं पानीयं च प्रकल्पितम् आसीत् । समारम्भस्य अपरम् अपि वैशिष्ट्यम् आसीत् यत् राजकुमारी क्सू अतिथीनाम् उपरि सुगन्धद्रव्यस्य सेचनं करिष्यति इति । एतस्य विशिष्टादरदर्शनस्य वार्तां श्रुत्वा सर्वे अतिथयः नितरां सन्तुष्टाः आसन् ।

राजकुमारी समारम्भस्थलम् आगतवती । यदा सा सुगन्धद्रव्येण प्रोक्षणं कुर्वती आसीत् । तदा अकस्मात् महान् वायुः आगतः । तस्मात् सर्वे दीपाः निर्विण्णाः जाताः । सर्वत्र अन्ध-कारः प्रसृतः । समारम्भार्थं यः पटमण्डपः निर्मितः आसीत् तस्य काष्ठमयाः स्तम्भाः कम्पमानाः जाताः । यद्यपि तत्र अननुशासनं न दृष्टं, तथापि सङ्गीतनृत्यादयः तु स्थगिताः । अतिथयः दीपानां ज्वालनाय सेवकानाम् आगमनं प्रतीक्षमाणाः आसन् ।

तावता राजकुमारी क्सू धावन्ती राज-समीपम् आगतवती, राज्ञः कर्णे मन्दस्वरेण उद्वेगपुरस्सरम् उक्तवती च – ''तात ! अत्र उपस्थितेषु दलपतिषु कश्चित् अन्धकारे मां स्वसमीपम् आकृष्टवान् । ततः आत्मानं मोचयन्ती अहं तस्य युतकस्य वर्णपट्टिकाम्



आकृष्य स्वीकृत्य आगतवती अस्मि । झटिति दीपान् ज्वालयितुं वदतु भवान् । तदा सः अपराधी अभिज्ञायेत'' इति ।

अनुज्ञां विना राजकुमार्याः स्पर्शः घोरः अपराधः इति मन्यते स्म तस्मिन् देशे । तादृशम् अपराधं कृतवान् जनः शिरश्छेदेन दण्ड्यते स्म ।

राजा प्रीत्या केशस्पर्शपुरस्सरं पुत्रीं सान्त्वयन् सभाम् उद्दिश्य उच्चस्वरेण अवदत् - ''अयि भोः, प्रियाः सभासदः ! अत्र शृण्वन्तु....। सर्वैः अत्र अवधीयताम् । एषः कश्चन शुभकरः क्षणः अस्ति । अनिष्टकरं युद्धं समाप्तिं गतम् अस्ति । शान्तिस्थितिः च पुनः स्थापिता अस्ति । दलपतीनां युतके स्थिता वर्णमयी वस्त्रपट्टिका तदीयस्य सैन्यीयस्थानस्य द्योतिका । वयं तु शान्तेः आराधकाः । अतः अहं सर्वान् दलपतीन् निवेदये यत् सर्वे भवन्तः तां वर्णमयीं वस्त्रपट्टिकाम् अवगुण्ठनरूपेण सकृत् शिरसि धृत्वा शान्तिप्रियतां सङ्केतयन्तु इति'' इति ।

अतिथयः सर्वे करताडनपूर्वकं राज्ञः एतम् आशयम् अभिनन्दितवन्तः । दलपतयः सर्वे वर्णमयीं वस्त्रपट्टिकां युतकतः अपनीय राज्ञः आशयस्य अनुगुणं शिरसि स्थापितवन्तः । तावता भटैः दीपाः ज्वालिताः आसन् । सङ्गीतं नृत्यं च पुनः आरब्धम् । मध्यरात्रपर्यन्तम् एषः समारम्भः अनुवृत्तः ।

सर्वेषां निर्गमनस्य अनन्तरं राजा पुत्रीम् अवदत् - ''वत्से ! अहं भवत्याः असन्तोषं कोपं च अवगच्छामि । यः भवत्याः विषये अनुचितं व्यवहारं कृतवान् सः किञ्चित् अधिकतया मद्यं सेवितवान् स्यात् । एषः समारम्भः तु तैः दलपतिभिः रणरङ्गे शौर्येण युद्धं यत् कृतं तस्य निमित्तम् आयोजितः । यदि तेन दलपतिना कृतः अनुचितः व्यवहारः अस्माभिः प्रकाश्येत तर्हि तस्य दण्डनं विधातव्यम् एव अभविष्यत् । तदा किम् अभविष्यत् इति भवती एव चिन्तयतु । समारम्भस्य वातावरणं सर्वथा कलुषितम् अभविष्यत् । यदि कश्चित् दलपतिः दण्डितः स्यात् तर्हि अन्ये सर्वे दलपतयः विषादं प्राप्तवन्तः स्युः एव । एतेन एतस्य समारम्भस्य आयोजनस्य उद्देशः एव विफलः अभविष्यत् । अतः मया किमपि न कृतम् । दोषं कृतवान् अभिज्ञातः इत्यपि न प्रकाशितम् । वत्से ! भवती एतत्सर्वम् अवगन्तुं शक्नुयात् एव ।

अतः उद्विग्नतां परित्यज्य शान्ता प्रसन्ना च भवतु'' इति ।

ततः वर्षानन्तरं 'चु'देशः प्रतिवेशिना शत्रुणा आक्रान्तः । राजा झुवाङ्गः एव सेनायाः नेतृत्वम् ऊढ्वा शत्रूणाम् आक्रमणं सम्मुखीकृतवान् । एतस्मिन् युद्धे सः अकस्मात् शत्रुदलपतिभिः आक्रान्तः अभवत् । राजा असहायः सन् अचिन्तयत् यत् इदानीं मम मरणं सन्निहितम् इति । तावता कश्चन दलपतिः महता धैर्येण प्राणापायम् अपि अविगणय्य राजसमीपम् आगत्य तं परितः स्थितान् शत्रुदलपतीन् सर्वान् क्षणाभ्यन्तरे संहृतवान् ।

एतस्मात् युद्धस्य चित्रम् एव परिवृत्तम् । विजयं हस्तगतं भावयन् स्थितः शत्रुराजः पराजयं प्राप्य प्रतिगतवान् । राजा झुवाङ्गः एव विजयी जातः ।

अनन्तरदिने राजा तं दलपतिम् आहूय अवदत् – ''भवतः विशेषसत्कारः करणीयः अस्माभिः । भवता मम, देशस्य च रक्षणं कृतम् अस्ति'' इति ।

''सत्कारस्य न कापि आवश्यकता । वर्षात् पूर्वम् एव प्राणदानेन भवता अहं सत्कृतः अस्मि एव'' इति राजानं विनयेन अवदत् सः दलपतिः ।

''भवता किम् उच्यमानम् अस्ति इति मया न अवगतम्'' इति अवदत् राजा ।

''गते वर्षे युद्धे प्राप्तं विजयं निमित्तीकृत्य आयोजिते समारम्भे राजकुमारीस्पर्शरूपम् अपराधं कृतवान् अहमेव । महावातकारणतः राजकुमार्याः पृष्ठतः स्थितः काष्ठस्तम्भः यदा अकम्पत तदा तस्याः रक्षणाय अहं झटिति ताम् आकृष्टवान् । यत् प्रवृत्तं तस्य कथनाय मया अवसरः एव न प्राप्तः । भवता आज्ञप्तं यत् वस्त्रपट्टिका शिरसि स्थापनीया इति । तदा मया निश्चितं यत् मम मरणं सन्निहितम् इति । किन्तु तदा मौनम् एव आश्रयन् भवान् प्राणदानेन माम् अनुगृहीतवान् आसीत्'' इति अवदत् सः दलपतिः ।

राज्ञः मुखात् राजकुमारी अपि प्रवृत्तं सर्वं ज्ञातवती । तस्याः नेत्राभ्यां कृतज्ञतासूचकाः पश्चात्तापद्योतकाः च द्वित्राः अश्रुबिन्दवः पतिताः ।

यः प्राणदानेन अनुगृहीतः आसीत् सः एव राज्ञः प्राणानां रक्षणं कृतवान् आसीत् ।





# मातृऋणम्

ब्रह्मदत्तः यदा काशीं परिपालयन् आसीत् तदा बोधिसत्त्वः धेनुपुत्ररूपेण जन्म प्राप्तवान् । सः सुन्दरः श्यामवर्णः च आसीत् । दर्शनमात्रेण मनः अपहरति स्म सः । तस्य सौन्दर्यस्य विषये पालयितुः विशेषाभिमानः आसीत् ।

तस्य पालकः कस्मिंश्चित् भाटकगृहे निवसति स्म । कदाचित् तेन स च ग्रामः त्यक्तव्यः अभवत् । भाटकधनं दातुं सामर्थ्यं न आसीत् तस्य । अतः सः गृहस्वामिन्यै तम् अल्पवयस्कं वृषभम् एव समर्प्य ततः निर्गतवान् ।

गृहस्वामिनी काचित् वृद्धा । तस्याः अन्ये बान्धवाः न आसन् । अतः सा तं वृषभम् एव पुत्रवत् प्रीत्या पश्यति स्म ।

प्रतिदिनम् उत्तमम् आहारं ददाति स्म सा । कोमलानि एव तृणानि तया दीयन्ते स्म । प्रतिदिनं नद्यां तं स्नापयति स्म सा । ताडनं तर्जनम् इत्यादिकं कदापि सर्वथा न करोति स्म सा ।

सः श्यामः वृषभः यथा यथा प्रवृद्धः तथा तथा तदीये शृङ्गे अपि प्रवृद्धे । सः समग्रे ग्रामे स्वच्छन्दतया अटति स्म । बालकाः बहवः तस्य उपरि उपविश्य निर्भयं सञ्चरन्ति स्म । तस्य सास्नां स्पृशन्तः प्रीतिं दर्शयन्ति स्म ते ।

कदाचित् सः वृषभः अचिन्तयत् – 'मम स्वामिनी वृद्धा नितरां निर्धना । सा मयि महतीं प्रीतिं दर्शयति । मम पोषणाय महान्तं श्रमम् अपि करोति । यदि अहं किञ्चित् धनं सम्पादयेयं तर्हि तस्याः श्रमः न्यूनीकृतः स्यात्' इति ।

'केन उपायेन धनं सम्पादयितुं शक्येत ?' इति सः चिन्तनम् आरब्धवान् । तेषु एव दिनेषु कश्चन वणिक् पञ्चशते शकटेषु धान्यानि आरोप्य तं ग्रामं प्रति एव आगतवान् । सामान्ये

मार्गे ते शकटाः सम्यक् एव सञ्चारम् अकुर्वन् । तस्य ग्रामस्य पार्श्वे काचित् नदी प्रवहति स्म । तस्याः तीरे स्थितः मार्गः सिकतामयः आसीत् । तस्मिन् मार्गे शकटस्य कर्षणाय वणिजः वृषभाः कष्टम् अनुभूतवन्तः । नदी यदा प्राप्ता तदा ते सर्वे गमनं स्थगितवन्तः । महता प्रयत्नेन ते चोदिताः वणिजा । किन्तु तस्य सर्वे प्रयत्नाः विफलाः ।

तस्मिन् समये बोधिसत्त्वरूपः श्यामवृषभः अन्यैः गोभिः सह चरन् आसीत् । एतस्मिन् गोसमूहे मम शकटानां कर्षणाय समर्थः कोऽपि वृषभः स्यात् इति विचिन्त्य वणिक् तस्य गोसमूहस्य समीपम् आगतवान् ।

वणिजः दृष्टिः श्यामवृषभे पतिता । सः अचिन्तयत् – 'एषः दृढकायः वृषभः मम शकटान् लीलया नदीं तारयेत् । एषः वृषभः असाधारणः एव अस्ति' इति ।

ततः सह गोपालान् आहूय अपृच्छत् – ''एषः श्यामवृषभः कस्य ? एतस्य साहाय्येन अहं मम शकटान् नदीं तारयितुम् इच्छामि । किं भवन्तः किञ्चित्कालम् एतं मम साहाय्यार्थं प्रेषयेयुः ?'' इति

''एतस्य स्वामी कोऽपि नास्ति इव । यद्यपि वृद्धा काचित् एतस्य स्वामिनी अस्ति, किन्तु सा एतं कदाचिदपि न बध्नाति । अतः एषः सर्वदा ग्रामे स्वच्छन्दं सञ्चरन् भवति । अतः भवान् स्वकार्याय एतं नेतुम् अर्हति'' इति अवदन् गोपालकाः ।

वणिक् रज्ज्वा बद्ध्वा वृषभं ततः नेतुं प्रयत्नं कृतवान् । किन्तु वृषभः एकं पदम् अपि अग्रे न अस्थापयत् । ततः तस्य सेवकाः



अपि आगत्य प्रयत्नं कृतवन्तः । तथापि साफल्यं न प्राप्तम् ।

'एषः वृषभः स्वस्य परिश्रमस्य अनुगुणं फलम् इच्छति इति मन्ये' इति विचिन्त्य वणिक् तस्य श्यामवृषभस्य समीपं गत्वा अवदत् – ''दर्शनात् भासते यत् भवान् वृषभराजः एव स्यात् इति । कृपया भवान् मम पञ्चशतं शकटान् नदीं तारयतु । अहं प्रतिशकटं रजतनाणकद्वयं दास्यामि । तन्नाम समग्रं कार्यं साधितं चेत् भवते सहस्रं रजतनाणकानि दास्यामि'' इति ।

वणिजः मुखात् एतानि वचनानि श्रुत्वा शिरः कम्पितवान् श्यामवृषभः ततः निर्गत्य नद्याः तीरे स्थितानां शकटानां समीपम् अगच्छत् ।

वणिजः सेवकाः एकस्मिन् शकटे तं

योजितवन्तः । सः लीलया तं शकटम् अपरं तीरं प्रति अनयत् । एवम् एकैकशः शकटं नयन् सः सर्वान् अपि शकटान् नदीं तारितवान् एव ।

यदा कार्यं समाप्तं तदा स्यूते पञ्चशतं रजतनाणकानि स्थापयित्वा तं स्यूतं वृषभस्य कण्ठे बद्धवान् वणिक् । तदा वृषभरूपी बोधिसत्त्वः अचिन्तयत् - 'एतस्मिन् दुर्बुद्धिः उत्पन्ना अस्ति । अतः एषः वचनभङ्गं कृतवान्' इति ।

ततः सः क्रुद्धः सन् सर्वेषां शकटानाम् अग्रभागं गत्वा तिष्ठन् शकटानां गमनं स्थगितवान् ।

तदा वणिक् अवगतवान् यत् एषः वृषभः सामान्यः न, अपि तु विशेषज्ञानवान् एव इति । अतः सः पुनरपि पञ्चशतं रजतनाणकानि अपरस्मिन् स्यूते स्थापयित्वा तमपि स्यूतं वृषभस्य कण्ठे बद्ध्वा विनयेन प्रार्थितवान् - ''महाशय ! अहं क्षन्तव्यः भवता । दत्तस्य वचनस्य अनुगुणम् इदानीं सहस्रं रजतनाणकानि मया दत्तानि सन्ति । अतः अस्माकं गमनाय कृपया अनुमतिं ददातु'' इति ।

श्यामवृषभः ततः निर्गत्य स्वामिन्याः वृद्धायाः समीपम् अगच्छत् । पञ्चशतं शकटाः सिकतामये प्रदेशे आकृष्टाः इत्यतः सः नितरां श्रान्तः आसीत् । तस्य श्रान्ततां लक्षितवती वृद्धा वस्त्रेण तदीयं शरीरं प्रीत्या मार्जयितुम् उद्युक्ता । तदा तया तस्य कण्ठे बद्धः धनस्यूतः लक्षितः ।

सा स्यूतम् उद्घाट्य दृष्टवती । तत्र सहस्रं रजतनाणकानि आसन् । तानि दृष्ट्वा सा आश्चर्यान्विता जाता । तावता तत्र आगताः गोपालकाः तां प्रवृत्तं सर्वम् अवदन् । वृद्धा अश्रूणि स्रावयन्ती प्रीत्या वृषभस्य शिरः आमृशन्ती अवदत् - ''वत्स ! मम निमित्तम् अहो, कियान् श्रमः ऊढः भवता ! किन्तु एतत् धनं स्वीकृत्य वृद्धा अहं किं वा करवाणि ?'' इति ।

ततः सा वृषभस्य शरीरस्य पीडायाः निवारणार्थं तं तैलेन लिप्त्वा उष्णेन जलेन स्नापितवती ।

प्रीत्या पोषितवत्याः मातुः ऋणात् एवं मुक्तिं प्राप्य बोधिसत्त्वः स्वस्य वृषभावतारं समापितवान् ।





# विष्णुपुराणम्

जमदग्निः मृतः इव भूमौ अपतत् । रेणुका-देवी पत्युः शरीरस्य उपरि पतित्वा रोदनम् आरब्धवती । तस्मिन् एव समये परशुरामः आश्रमात् प्रतिनिवृत्तः । प्रवृत्तं सर्वं श्रुत्वा नितरां क्रुद्धः सः माहिष्मतीं प्रति प्रस्थितः ।

अत्रान्तरे भृगुमहर्षिः जमदग्नेः आश्रमं प्रति आगतवान् । प्रवृत्तं समग्रं ज्ञात्वा सः योग-बलात् जमदग्निम् उज्जीवितवान् ।

माहिष्मतीनगरे सैनिकाः धेनुं ताडयन्तः आसन्, यतः सा तेषाम् इच्छायाः अनुगुणं वस्तूनि यच्छन्ती न आसीत् । तस्मिन् एव समये परशुरामः तत्र उपस्थितः । तस्य दर्शन-मात्रात् भीताः सैनिकाः ततः पलायितवन्तः । परशुरामः प्रीत्या धेनुं स्पृशन् अवदत् यत् भवती निर्भयतया आश्रमं प्रतिगच्छतु इति । धेनुः आश्रमं प्रति अधावत् ।

ततः परशुरामः प्रासादस्य समीपं गत्वा उच्चस्वरेण अवदत् – ''अयि ! दुष्ट ! राजा प्रजानां पालनं कुर्यात् । यदि सः कर्तव्यच्युतः भवति तर्हि तेन दण्डः अवश्यम् अनु-भोक्तव्यः । भवान् प्रासादात् बहिः आगत्य पापस्य फलं प्राप्नोतु'' इति ।

तस्य घोरं रूपं दृष्ट्वा द्वारपालकाः पलायन-सूत्रं पठितवन्तः । ये द्वित्राः धैर्येण स्थितवन्तः ते परशुरामस्य परशोः प्रहारं प्राप्य यमलोकं गताः । परशुरामः कालरुद्रः इव गर्जन् कार्तवीर्यार्जुनं निन्दन् अवदत् – ''अये पापिन् ! क्वास्ति भवान् ? भवतः पापघटः पूर्णः अस्ति । यस्य शासने गो-सज्जन-ऋषिमुनयः पीडिताः भवन्ति सः हन्तव्यः एव'' इति ।

कार्तवीर्यार्जुनः चिन्तितवान् आसीत् यत् परशुरामः कश्चन साधारणः मुनिकुमारः स्यात्



इति । किन्तु यदा तस्य पराक्रमादिकं ज्ञातं तदा सः सहस्रेण हस्तैः आयुधानि प्रयुक्तवान् । उभयोः अपि घोरं युद्धं प्रवृत्तम् ।

परशुरामः कार्तवीर्यार्जुनस्य सर्वाणि अस्त्र-शस्त्राणि खण्डितवान् । तदीयान् सहस्रं हस्तान् अपि निर्दयं छिन्नवान् । तेन कार्तवीर्यार्जुनः हतवीर्यः सन् भूमौ अपतत् । तदा तेन स्मृतं यत् अहं चक्रपुरुषः अस्मि, शापकारणतः एतत् जन्म प्राप्तम् अस्ति मया इति । तेन परशुरामस्य विष्णुस्वरूपम् अपि अवगतम् । ततः सः सुदर्शनचक्रे विलीनः जातः ।

परशुरामः आश्रमं प्रत्यागतः । तत्र पिता सजीवं दृष्टः तेन । नितरां सन्तुष्टः सः पितरं कार्तवीर्यार्जुनस्य मरणवार्तां निवेदितवान् । एतां वार्तां श्रुत्वा जमदग्निमहर्षिः अवदत् - ''भवता यत् कृतं तत् सर्वथा अनुचितम् एव । एतस्य प्रायश्चित्तरूपेण तपः आचरणीयं भवता'' इति ।

''तात ! यः स्वकर्तव्यं विस्मृत्य पापाचरणे उद्युक्तः भवति तस्य दण्डनाय सर्वोऽपि प्रवृत्तः भवितुम् अर्हति एव । अतः मया यत् कृतं तत् अनुचितं तु न । तथापि भवता आदिष्टम् इत्यतः तपः आचरिष्यामि, न तु प्रायश्चित्त-रूपेण'' इति उक्त्वा परशुरामः तपसे अरण्यम् उद्दिश्य गतवान् ।

कार्तवीर्यार्जुनस्य सहस्रं पुत्राः हैहयवंशीयान् क्षत्रियान् मेलयित्वा जमदग्नेः आश्रमं प्रति गतवन्तः । तस्मिन् समये महर्षिः जमदग्निः समाधिस्थः आसीत् । सैनिकाः तस्य शिरः कर्तयित्वा दूरे क्षिप्तवन्तः । रेणुकादेवी स्वस्य रक्षणाय परशुरामम् एकविंशतिवारम् आहूत-वती । पत्युः शरीरस्य उपरि पतित्वा विलपनं कृतवती च । जमदग्नेः शिरः लुठत् गत्वा शिलयोः मध्ये अपतत् । क्षत्रियाः आश्रमं दग्धवन्तः । एतेन पत्युः शरीरस्य उपरि पतिता रेणुकादेवी अपि दग्धा जाता ।

अरण्ये तपसि विलीनस्य परशुरामस्य तपसः भङ्गः अकस्मात् जातः । तस्य कर्णे मातुः ध्वनिः एकविंशतिवारं प्रतिध्वनितः ।

एषः कश्चन अशुभसङ्केतः इति चिन्तयन् परशुरामः तपः परित्यज्य आश्रमं प्रत्यागतः । तस्मिन् समये आश्रमः ज्वलति स्म । तदीयौ मातापितरौ दग्धौ जातौ आस्ताम् । हैहय-वंशीयाः क्षत्रियाः सर्वान् आश्रमवासिनः, समीपस्थान् ग्रामीणान् च लुण्ठयन्तः आसन् ।

एतत् दृष्टवतः परशुरामस्य नेत्राभ्याम् अग्निज्वाला निर्गता । सः शिवं ध्यायन् परशुं हस्तेन गृहीत्वा सर्वान् क्षत्रियान् कण्टकसस्यानि

इव नाशितवान् ।

ततः सः शिलयोः मध्ये पतितं पितुः शिरः उन्नीय उरसा आलिङ्ग्य अवदत् - ''मम हृदये स्थितायाः क्रोधज्वालायाः कारणतः नेत्रयोः अश्रूणि सर्वथा शुष्काणि जातानि सन्ति । अहं क्षत्रियाणां रक्तेन भवतः तर्पणं विधास्यामि, तस्यैव रक्तस्य कुण्डे भवतः शिरः मज्जयित्वा अन्त्येष्टिं करिष्यामि'' इति ।

ततः उन्नतां शिलाम् आरुह्य परशुम् उन्नीय गर्जन् सः एकविंशतिवारं प्रतिज्ञां कृतवान् - ''अहम् एतेन परशुना पृथिवीस्थान् सर्वान् क्षत्रियान् नाशयिष्यामि'' इति ।

तस्य भयङ्करः ध्वनिः दिशासु प्रतिध्वनितः जातः । तां भीषणप्रतिज्ञां श्रुत्वा ब्रह्मादिदेवाः ऋषिमहर्षयश्च तत्समीपम् आगत्य - 'भवान् शान्तो भवतु' इति निवेदितवन्तः ।

महर्षिः भृगुः अवदत् - ''भगवान् स्वयमेव दुष्टानां दण्डनं शिष्टानां रक्षणं च करिष्यति । दण्डनकार्यम् ऋषिवंशीयानां न'' इति ।

तदा परशुरामः अवदत् - ''भगवान् आकाशात् अवतीर्य कार्यं न करिष्यति । सः भगवान् अस्मादृशान् कार्ये प्रेरयन् कार्यं साधयिष्यति । यदा भूलोके पापकृत्यानि वर्धन्ते, तदा भगवान् मानवेषु कस्मिंश्चित् स्वशक्तिम् आवाहयति, पापिनां दण्डनं कारयिष्यति च । इदानीं भगवान् मद्द्वारा एतादृशं कार्यं कारयन् अस्ति'' इति । ततः सः हिमालयस्य कैलासशिखरं प्रति गतवान् शिवस्य तोषणाय ।

तस्य तपस्यया शिवः सन्तुष्टः जातः । परशुरामः तम् अवदत् - ''शिवस्य अनुज्ञां



विना तृणम् अपि न चलति इति श्रूयते । भवान् तु लयपुरुषः । मम प्रतिज्ञा अपि ज्ञायते भवता । तां प्रतिज्ञां पूरयितुं यत् बलम् आवश्यकं तत् मह्यं ददातु कृपया'' इति ।

शिवः तस्मै विविधानि अस्त्राणि शस्त्राणि च दत्त्वा एकं दिव्यास्त्रम् अपि यच्छन् अवदत् - ''एतत् लोके भार्गवास्त्रनाम्ना प्रसिद्धिं गमिष्यति । भवान् विशिष्टेन केनचित् कारणेन मानवरूपेण जन्म प्राप्तवान् अवतारपुरुषः अस्ति । भवतः कार्ये कोऽपि विघ्नः न भविष्यति'' इति ।

एतदनन्तरं परशुरामः गोलोके कृष्णरूपेण वसतः विष्णोः समीपं गतवान् । कृष्णः तस्मै कवचं महाशक्तिमत् दिव्यं धनुः च दत्त्वा अवदत् यत् रामावतारसमये मया एतत् प्रतिस्वीकरिष्यते इति ।

एवं देवानां द्वारा दिव्यास्त्राणि प्राप्तवान्

परशुरामः क्षत्रियसंहारम् आरब्धवान् । ये राज्ञां दुष्टशासनेन प्रपीडिताः आसन् ते तस्य साहाय्यं कृतवन्तः । कार्तवीर्यार्जुनस्य पुत्राः, सर्वे हैहयवंशीयाः च नगरं परित्यज्य इतस्ततः धावितवन्तः । परशुरामः आग्नेयास्त्रेण माहिष्मतीनगरं ज्वालितवान् । एकविंशतिं दिनानि तत् नगरं ज्वलत् आसीत् । एवं हैहयराजानां राजधानी भस्मसात् जाता ।

कार्तवीर्यस्य सहस्रं पुत्राः अन्ये हैहयवंशीयाः च सम्भूय परशुरामं सम्मुखीकृतवन्तः । किन्तु परशुरामः बलिपशून् इव सर्वान् संहृतवान् । तेषां शिरसः कर्तनात् प्राप्तेन रक्तेन पञ्च कुण्डान् निर्माय तेषु पितुः शिरः मज्जितवान् । एवं सः पितुः तर्पणं विधाय तदीयम् अग्निसंस्कारं निर्वर्तितवान् ।

यत्र परशुरामेण पञ्च कुण्डानि निर्मितानि तत् स्थानं स्यमन्तपञ्चकम् इति ख्यातं जातम् । अग्रे तदेव क्षेत्रं कुरुक्षेत्रत्वेन अपि ख्यातम् अभवत् । एतस्मिन् एव स्थले महाभारतयुद्धकाले पुनरपि रक्तस्य नदी प्रावहत् ।

पितुः श्राद्धं निर्वर्त्य परशुरामः पुनरपि क्षत्रियाणां संहाराय निर्गतः । प्रतिकोणम् अन्विष्य सः तान् संहृतवान् । क्षत्रियमातरः स्वशिशून् ब्राह्मणानां गृहेषु रक्षितवत्यः । स्वयं च ब्राह्मणीवेषं धृत्वा आत्मरक्षणं कृतवत्यः ।

ब्राह्मणकुटुम्बे प्रवृद्धाः क्षत्रियतरुणाः स्वशक्त्या राज्यानि विस्तारितवन्तः । किन्तु परशुरामः पुनरपि सर्वत्र अटित्वा तेषां संहारं कृतवान् । एवम् एकविंशतिवारं भूभ्रमणं कृत्वा सर्वान् क्षत्रियान् संहृतवान् सः स्वस्य



प्रतिज्ञायाः पूर्तेः अनन्तरं समग्रं भूमण्डलं कश्यपाय दानरूपेण दत्तवान् । ततः सः दक्षिणसमुद्रे स्थितं महेन्द्रपर्वतम् आश्रित्य तपः कर्तुम् उद्युक्तः जातः ।

ये क्षत्रियाः बालकाः ब्राह्मणपरिवारेषु आश्रमेषु च गोपिताः आसन् तेभ्यः कश्यपः परशुरामतः प्राप्तां भूमिम् अर्पितवान् । एतेन पुनरपि क्षत्रियाणां राज्यानि स्थापितानि जातानि । तेषां वंशाभिवृद्धिः अपि आरब्धा ।

इक्ष्वाकुवंशे रघुः नाम राजा जातः । रघुः पराक्रमी यशस्वी च आसीत् इत्यतः तदीयः वंशः 'रघुवंशः' इत्येव ख्यातः जातः । एतस्मिन्नेव वंशे विष्णुः राज्ञः दशरथस्य पुत्रत्वेन जन्म प्राप्य राम इति नाम लब्धवान् ।



हिरण्यकशिपुं हिरण्याक्षं च विष्णुः नरसिंहावतारसमये मारितवान् आसीत् । अनन्तरजन्मनि तौ रावणकुम्भकर्णत्वेन जन्म प्राप्तवन्तौ आस्ताम् । ताभ्यां पुनरपि लोकस्य पीडा आरब्धा ।

देवयक्षगन्धर्वादिभ्यः मरणं यथा न प्राप्येत तथा वरं प्राप्तवान् आसीत् रावणः । तस्य विश्वासः आसीत् यत् मानवः मम केशं कम्पयितुम् अपि नार्हति इति । मम मृत्युभयं नास्तीति चिन्तयन् सः अहङ्कारी भूत्वा जनान् विविधैः प्रकारैः पीडयितुम् उद्युक्तः जातः ।

कुम्भकर्णस्य शरीरं सुविशालम् आसीत् । षट् मासान् यावत् निद्रां, पुनः षट् मासान् यावत् जागरणं च वरत्वेन प्राप्तवान् आसीत् सः । रावणः लङ्कातः कुबेरम् अपसार्य तदीयं पुष्पकविमानं वशीकृत्य लङ्कायाम् एव वसन् वैभवोपेतं जीवनं यापयति स्म । राक्षसान् सङ्घटय्य सः अन्यान् अपि लोकान् जितवान् आसीत् । एतस्मात् तदीयः अहङ्कारः प्रवृद्धः । रावणस्य दश शिरांसि आसन् । अतः सः 'दशाननः' इत्यपि निर्दिश्यते स्म ।

कदाचित् स्वस्य विंशतेः भुजानां बलस्य कारणतः गर्वं प्राप्तवान् सः कैलासं वशीकर्तुं प्रयासम् अकरोत् । तदा भगवान् शिवः पादाङ्गुष्ठेन तं नोदितवान् । तदा शिलायाः अधः गतः सः उच्चैः रवं कृतवान् । ततः एव 'रावणः' इति नाम जातं तस्य ।

शिवस्य क्रोधस्य अपनयनाय रावणः घोरं तपः कृत्वा स्वस्य शिरांसि एकैकशः कर्तयित्वा अर्पितवान् । तस्मात् शिवः प्रसन्नः जातः । ततः आरभ्य रावणः महाशिवभक्तः जातः ।

रावणः महावीरः पराक्रमी च यथा तथैव महादुष्टः अपि आसीत् । परनार्यपहरणं पौरुष-

द्योतकं भावयति स्म सः । परनारीः अपहृत्य कारागारे स्थापनं तस्य प्रवृत्तिः आसीत् । अतः एव तेन कश्चन शापः प्राप्तः आसीत् यत् यदि परनारीं बलात् अनुभोक्तुं प्रयत्नः क्रियते तर्हि शिरांसि भग्नानि भविष्यन्ति इति ।

मयस्य पुत्री मन्दोदरी तस्य पत्नी । सा पत्युः हितकाम्यया पतिं रावणं सन्मार्गं स्मारयति स्म । भ्राता विभीषणः अपि रावणं पापकर्मभ्यः निवारयितुं प्रयासं करोति स्म । किन्तु रावणः तु तान् धिक्कुर्वन् दुष्टताम् आचरन् एव भवति स्म ।

विन्ध्याचलस्य दक्षिणभागपर्यन्तं राक्षसानां राज्यं प्रसृतम् आसीत् । आर्यावर्ते प्रचलत्सु यज्ञेषु विघ्नम् उत्पादयन्तः राक्षसाः ऋषिमुनीन् मारयन्तः आश्रमवासिनां, निर्दोषजनानां च पीडनात् महान्तम् आनन्दम् अनुभवन्ति स्म ।

तेषु एव दिनेषु कुशध्वजः नाम राजर्षिः वेदपाठद्वारा काञ्चित् पुत्रीं प्राप्तवान् । तस्याः नाम वेदवती इति जातम् । सा विष्णुं पतिरूपेण प्राप्तुम् इच्छति स्म । अतः सा घोरं तपः आचरितवती । रावणः तां प्राप्तुम् इच्छति स्म । अतः सा वेदवतीम् अवदत् - ''अहं विष्णोः अपि श्रेष्ठः । अतः मम परिणयम् अङ्गीकृत्य लङ्कां प्रति आगच्छतु'' इति ।

एतत् निराकुर्वती वेदवती रावणम् अपमानकराणि वचनानि अवदत् । तदा रावणः क्रुद्धः सन् तां बलात्कारेण आकृष्य नेतुं प्रयासम् अकरोत् ।

एतस्मात् दुःखतप्ता रोषाविष्टा च वेदवती रावणं शप्तवती - ''अये दुष्ट ! भवता मम शरीरस्य स्पर्शं कुर्वता अपवित्र्यं कल्पितम् । अतः अहम् एतत् शरीरं त्यजामि इदानीम् एव । किन्तु स्मरतु - अग्रिमे जन्मनि लङ्कायाम् एव जन्म प्राप्य अहं भवतः नाशस्य कारणं भविष्यामि'' इति । एतावत् उक्त्वा सा योगबलेन अग्निं प्रज्वलय्य तेन अग्निना ज्वलिता सती भस्मीभूता जाता ।

राक्षसानाम् अत्याचारः दिने दिने प्रवृद्धः । जनाः प्रतिदिनं भगवन्तं प्रार्थयन्ते स्म - 'त्रायस्व भगवन्, त्रायस्व' इति । जगतः कल्याणाय अवतारं प्राप्तुं सुसमयः सम्प्राप्तः अस्ति इति विष्णुः अचिन्तयत् । अतः सः मानवरूपेण जन्म प्राप्नोत् । देवाश्च वानररूपेण जन्म प्राप्तवन्तः ।



# भूमिः कथं समतला अभवत् ?

स्कॉटलेण्डदेशः सुन्दरः कश्चन देशः । सः देशः विस्मयमपि जनयति । तत्रत्यानि क्षेत्राणि द्विधा विभक्तुं शक्यानि । दक्षिणस्यां दिशि स्थिता निम्ना भूमिः, उत्तरस्यां दिशि वर्तमाना उन्नता भूमिः चेति ।

उन्नतभूमौ स्थितं क्षेत्रं नयनमनोहरम् । भव्यः पर्वतः अस्ति तत्र । मध्ये उपत्यकाः अपि सन्ति । विशालः नीलसरोवरः अपि अस्ति तत्र ।

आहत्य उन्नतभूमौ स्थितं क्षेत्रं काञ्चित् भव्यां कल्पनां ददाति । एतत् स्पष्टतया वक्तुं शक्यते यत् एतत् एकम् अपूर्वं क्षेत्रम् इति । कोऽपि तत् क्षेत्रं स्वेच्छानुगुणं परिवर्तयितुं न शक्नोति । प्रकृतिः अत्र स्वसौन्दर्यं पूर्णतया प्रसारितवती दृश्यते, तेनैव सह तत्रत्यं वातावरणं स्वाधीनीकृतवती अपि दृश्यते ।

किन्तु कश्चन अपवादः अपि अस्ति तत्र । नीलसरोवरस्य तटप्रदेशे स्थिते क्षेत्रे यदि पद्भ्यां गम्यते तर्हि तत्र हरितवर्णमयी काचन उपत्यका दृश्यते । सा द्रष्टॄन् विस्माययति । यतः सः प्रदेशः समतलः सुफलः च अस्ति । अन्याः उपत्यकाः तु निम्नोन्नताः शिलापूर्णाश्च सन्ति ।

सः प्रदेशः एवं यत् दृश्यते तस्य कारणम् एवं हि श्रूयते -

बहोः कालात् पूर्वम् एषा उपत्यका अपि अन्याः उपत्यकाः इव निम्नोन्नता शिलापूर्णा च आसीत् । सर्वत्रापि महाशिलाः एव दृश्यन्ते स्म । तस्मिन् प्रदेशे कुत्रचित् अपि एकं पदं स्थापयितुम् अपि न शक्यते स्म । एवं स्थिते कृषिकरणादिवार्ताः तु कथं भवेयुः तत्र ? अतः तत्रत्याः दरिद्राः एव आसन् । कृष्यर्थं भूमिरेव न आसीत् किल ? तत्रत्यैः पालितानां पशूनां स्थितिरपि न तावती भिन्ना । तेऽपि बुभुक्षया म्रियन्ते स्म । एवं तत्रत्यानां जीवनं

अतीव कष्टकरम् आसीत् ।

उपत्याकायाः अधः किञ्चिद्दूरे पर्वत-मध्यभागे किञ्चन गृहम् आसीत् । तत् सर्वेषां दृष्टिगोचरं नासीत् । तस्मिन् गृहे कश्चन ज्ञानी निवसति स्म । सः अनेकान् विषयान् जानाति । सर्वस्याः समस्यायाः परिहारोऽपि ज्ञायते स्म तेन ।

एकस्मिन् दिने तस्य प्रदेशस्य कश्चन युवकः सभाम् आयोजितवान् । तत्र कश्चन निर्णयः सर्वैः स्वीकृतः यत् इतःपरं कष्टानि सोढुं न शक्यम्, अतः एतत् स्थानं त्यक्त्वा यत्र भूमिः समतला अस्ति तत्र गन्तव्यम् इति । किन्तु तादृशं स्थानं कुत्र अस्ति इति पुनः जिज्ञासा आरब्धा ।

तदा केनचित् उक्तम् - 'तं ज्ञानिनं पृच्छाम' इति । सर्वैः एतत् अङ्गीकृतम् । तं ज्ञानिनं द्रष्टुं सर्वे पर्वतस्य अधः आगत्य ज्ञानिनः गृहं गताः । ''वयं बहुदरिद्राः । किन्तु प्रयत्नशीलाः न इति न । अस्माकम् उपत्यकाप्रदेशः बृहतीभिः शिलाभिः व्याप्ता अस्ति । तत्र किमपि कर्तुं न शक्नुमः । अतः एतत् स्थानं विहाय अन्यत्र गन्तुम् इच्छामः । अस्मान् तादृशं योग्यं स्थानं वदतु, यत्र वयं सर्वे कृष्यादिकं कुर्वन्तः सुखेन जीवितुं शक्नुयाम'' इति तं ज्ञानिनं ते सर्वे उक्तवन्तः ।



सः ज्ञानी क्षणकालं चिन्तितवान् । ततः सः भूमौ स्थितां मुष्टिपरिमितां मृदं स्वीकृत्य उक्तवान् - ''एतादृशी सत्त्वगुणयुता मृत् अन्यत्र कुत्रापि न लभ्यते'' इति ।

''एतत् सत्यमेव स्यात् । किन्तु अत्र पतितानां शिलानां दूरीकरणम् अशक्यम् । एतदर्थम् अलौकिकी शक्तिः अपेक्षिता । अस्मासु तादृशी शक्तिः नास्ति'' इति आगताः युवकाः उक्तवन्तः ।

'एषा समस्या कथं परिहरणीया ?' इति ज्ञानी किञ्चित्कालम् अचिन्तयत् । ततः सः कश्चन उपायम् आश्रितवान् ।

तस्मिन् काले राक्षसाः अपि भूमौ एव वसन्ति स्म । उभौ राक्षसौ पार्श्वस्थे पर्वते निवसतः स्म । तौ उभौ अपि 'अहमेव अधिकशक्तिमान्, इति परस्परं वदन्तौ तत् प्रमाणयितुं सर्वदा कलहं कुरुतः स्म । तौ अन्विष्य गतः सः ज्ञानी तस्य पर्वतस्य शिखरं प्राप्तवान् ।



राक्षसयोः पुरतः गत्वा सः ज्ञानी उक्तवान् - ''भवतोः एषः कलहः मूर्खतायै । अनेन कलहेन भवन्तौ कदाचिदपि निर्णयं न प्राप्नुतः । अहं तु वृद्धः । तथापि मम विश्वासः अस्ति यत् भवतोः कलहं पूर्णतया समापयितुम् अहं शक्नोमि इति । श्वः अधस्तनीम् उपत्यकाम् आगच्छताम् । तत्र भवतोः बलं किम् इति द्रष्टुं किञ्चन कार्यम् अहं ददामि । अन्ये अपि भवतोः कस्य शक्तिमत्त्वम् अधिकम् इति यथा जानीयुः तथा करिष्यामि'' इति ।

अनन्तरदिने तौ उभावपि राक्षसौ तं प्रदेशं आगतौ । तयोः आगमनेन स पर्वतप्रदेशः कम्पितः अभवत् । तत्र सः ज्ञानी तत्रत्यैः जनैः सह तयोः स्वागतं व्याहृतवान् ।

''पश्यताम् । भवन्तौ अत्र पतिताः लघु-शिलाः किम् इतः सुदूरं क्षेप्तुं शक्नुतः ?'' इति समीपस्थं कञ्चन प्रदेशं निर्दिश्य पृष्टवान् सः ज्ञानी ।

एतत् श्रुत्वा एतौ उभावपि उच्चैः हसितवन्तौ । ततः उभौ अपि एकैकां बृहतीं शिलाम् उन्नीय बलात् सुदूरं क्षिप्तवन्तौ । ते शिले कुत्र पतिते इति केनापि न ज्ञातम् ।

''मया अङ्गीकृतं यत् भवतोः समाना शक्तिः अस्ति इति । सा शक्तिः कस्मिन् अधिका, कस्मिन् च न्यूना इत्यपि वक्तुं शक्यते । इदानीं तावत् समभावः दृश्यते भवतोः । अतः पुनरेकवारं प्रयत्नः क्रियताम् । इदानीं भवद्भ्यां बृहत्परिमाणात्मिकाः शिलाः प्रक्षेप्तव्याः'' इति सः वृद्धः ज्ञानी उक्तवान् ।

वृद्धस्य वचनानां समाप्तेः पूर्वमेव तौ राक्षसौ सन्नद्धौ एव । उभाभ्याम् अपि एकैका तादृशी बृहती शिला उन्नीता, यस्याः तु उन्नयने सामान्याः पञ्चदशाधिकाः जनाः अपि न शक्नुयुः । आश्चर्येण पश्यतां जनानां पुरतः तौ विनायासं ते शिले सुदूरं प्रक्षिप्तवन्तौ ।

किन्तु सः वृद्धस्तु कमपि प्रतिस्पन्दं न

प्रदर्शितवान् । क्षणकालानन्तरं तेन उक्तम् - ''अनया परीक्षया अपि भवतोः कः बलवत्तरः इति निर्णयः न जातः एव । अतः इदानीम् अन्यविधः एव प्रयत्नः क्रियताम् । क्षेत्रे पतिताः शिलाः पर्वतखण्डाश्च दृश्यन्ते किल ? तान् कः अधिकदूरं क्षिपति इति दृष्ट्वा निर्णयं वदामि । आदौ वामहस्तेन, ततः दक्षिणहस्तेन च क्षिपताम्'' इति ।

तौ द्वावपि झटिति कार्यम् आरब्धवन्तौ एव । वामहस्तेन तान् शिलाखण्डान् सङ्गृह्य सुदूरं क्षिप्तवन्तौ । उपत्यकायाः ऊर्ध्वभागे स्थिताः सर्वाः शिलाः एवमेव दूरं क्षिप्तवन्तौ तौ । शिलाक्षेपणेन जातः महान् शब्दः परितः प्रदेशे व्याप्तः ।

यदा वामहस्तः शक्तिहीनः जातः तदा दक्षिणहस्तेन क्षेपणम् आरब्धवन्तौ तौ । सूर्यास्तपर्यन्तं तौ कार्यं कुर्वन्तौ एव आस्ताम् । तावता तस्याम् उपत्यकायां कापि शिला नावशिष्टा । किन्तु तौ उभावपि राक्षसौ तु बलहीनौ जातौ आस्ताम् । स्थातुमपि तयोः शक्तिः न आसीत् ।

इदानीं सः वृद्धः ज्ञानी उक्तवान् - ''इदानीम् अपि भवतोः कः बलिष्ठः इति वक्तुं न शक्नोमि । यतः भवद्भ्यां क्षिप्तानां शिलानां गणना का इति वयं न जानीमः । अतः भवन्तौ उभौ अपि गत्वा अतिदूरं गता शिला का इति दृष्ट्वा आगच्छताम् । सा शिला लब्धा चेत् ताम् आनयताम् । अस्माकं पुरतः पुनः सा शिला प्रक्षिप्ता चेत् येन प्रक्षिप्ता शिला दूरं गच्छति सः एव बलशाली इति निर्णयं वदामः'' इति ।

तौ मूर्खदैत्यौ तस्य वचनम् अङ्गीकृत्य दूरं गतां शिलाम् अन्वेष्टुं गतवन्तौ । किन्तु ताभ्याम् एतत् न ज्ञातमेव यत् स वृद्धः स्वोद्देशपूर्तये एतादृशं कार्यं कारितवान् इति ।

यदि तौ उभावपि इदानीमपि शिलान्वेषणे निरतौ स्यातां तर्हि किमपि आश्चर्यं नास्ति तत्र, यतः तौ इतोऽपि न प्रत्यागतवन्तौ एव । किन्तु यदा दक्षिणस्यां दिशि वायुः वाति तदा तयोः कलहशब्दः श्रूयते । तयोः कारणतः उपत्यकायां स्थिताः समस्याः तु दूरीभूताः ।

तत्र स्थिताः जनाः परिश्रमेण तस्यां भूमौ कृषिकार्यं कुर्वन्तः प्रभूतं धनं सम्पादितवन्तः । अस्मिन् विषये सः वृद्धः धन्यवादार्हः, यस्य उपायेन महती समस्या परिहृता जाता । इदानीम् अपि सः प्रदेशः अतीव फलदायकः अस्ति । तादृशः प्रदेशः अन्यत्र कुत्रापि नास्ति ।







# कृपणः वेषधारी च

गुरुनाथः कश्चन महाधनिकः । किन्तु सः महाकृपणः अपि । कदाचित् ग्रामं प्रति कश्चन विदूषकः आगतः । सः संन्यासिवेषेण गुरुनाथस्य गृहम् आगत्य उच्चैः - ''भवति, भिक्षां देहि'' इति उक्तवान् ।

तस्य एतत् वचनं गुरुनाथः न असहत । सः बहिः आगत्य तं संन्यासिनं दृष्ट्वा - ''सुदृढः भवान् किमर्थं भिक्षाम् अटति ? अन्धः पङ्गुः वा नास्ति खलु भवान्'' इति वदन् द्वारं पिहितवान् ।

अनन्तरदिने सः वेषधारी अन्धः भूत्वा गुरुनाथस्य गृहम् आगत्य उच्चस्वरेण उक्तवान् - ''अम्ब, अन्धाय मह्यं यत्किञ्चित् ददातु'' इति ।

तं दृष्ट्वा गुरुनाथः कोपेन तर्जयन् - ''भिक्षां याचतः भवतः लज्जा नास्ति किम् ? भवान् पङ्गुः मूको वा नास्ति किल ? गच्छतु इतः'' इति उक्तवान् ।

तृतीये दिने सः वेषधारी मूक इव अभिनयन् घण्टां वादयन् गुरुनाथगृहम् आगतः ।

गुरुनाथः तं दृष्ट्वा - ''किम् अभवत् भवतः ?'' इति पृष्टवान् ।

वेषधारी अभिनयेन एव 'अहं मूकः' इति सूचितवान् ।

''मूकता अस्ति चेत् किम् ? हस्तपादाः तु सुदृढाः सन्ति एव । कार्याणि कर्तुं भवान् समर्थः एव अस्ति'' इति वदन् गुरुनाथः द्वारं पिहितवान् ।

अनन्तरदिने गुरुनाथस्य पत्नी पाकगृहे आगतं सर्पं दृष्ट्वा भीता आक्रोशन्ती बहिः आगता । मञ्चस्य उपरि उपविष्टं पतिम् - ''अहो, गृहस्य अन्तः सर्पः आगतः अस्ति'' इति वदन्ती उच्चैः आक्रोशनं कृतवती ।

गुरुनाथः गृहस्य अन्तः धावितवान् । पाकगृहे स्थितं सर्पं दृष्ट्वा 'सर्पः ! सर्पः !' इति आक्रोशन् बहिरागतः । पार्श्वगृहस्थाः

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



सर्वे आगतवन्तः । ते सर्पं मारयितुं कमपि प्रयत्नम् अकुर्वन्तः – ''सर्पः कुत्र अस्ति; कीदृशः अस्ति; कीदृशेन वर्णेन युक्तः सः'' इत्यादीन् प्रश्नान् प्रष्टुम् आरब्धवान्तः । किन्तु तेषु कोऽपि गृहस्य अन्तः न गतः एव ।

तावति काले तत्र कश्चन सर्पग्राहकः आगतः । तं दृष्ट्वा गुरुनाथः भयात् मुक्तः । मुखे आगतं स्वेदं मार्जयन् सः उक्तवान् – ''गृहं कश्चन सर्पः प्रविष्टः अस्ति । तं गृहीत्वा अस्मान् रक्षतु'' इति ।

''किम् उक्तवान् भवान् ? सर्पः इति ? कुत्र अस्ति सः ? दर्शयतु'' इति उक्तवान् सः अहितुण्डिकः ।

''इदानीं सः अदृश्यः अभवत् । कुत्रापि बिलं प्रविष्टः इति मन्ये'' इति गुरुनाथः उक्तवान् ।

''तर्हि महत् कष्टम् आपतितम् । सर्पस्य द्वेषः द्वादशवर्षपर्यन्तम् इति ज्येष्ठाः वदन्ति । कथमपि गृहीत्वा ताडनीयः सः । तेनैव सः मृतः भवेत् । अन्यथा बहु कष्टम्'' इति सर्पग्राहकः भायितवान् ।

''भवतः मुखात् एव एतादृशं वचनं निस्सरति चेत् अस्माकं गतिः का ?'' इति पृष्टवान् गुरुनाथः ।

''अस्तु । सर्पम् अहम् इतः प्रेषयिष्यामि । कार्यं तु कठिनम् अस्ति । प्राणाः अपि गच्छेयुः । अतः पञ्चशतं रूप्यकाणि दातव्यानि भवन्ति । अङ्गीकारः अस्ति किम् ?'' इति सर्पग्राहकः पृष्टवान् ।

पञ्चशतं रूप्यकाणि इति श्रवणेनैव गुरुनाथस्य श्वासः गतः इव । महत्याः चर्चायाः अनन्तरं शतस्य रूप्यकाणां दानम् अङ्गी–

कृतवान् धनिकः । ततः सर्पग्राहकः पाकगृहं गत्वा नागस्वरवादनम् आरब्धवान् । तदा भित्तौ स्थितात् सन्धिभागात् बहिरागतः सर्पः फणां चालयन् स्थितः । तदा झटिति तं गृहीत्वा पेटिकायां स्थापितवान् सर्पग्राहकः । गुरुनाथः पुनः उज्जीवितः इव अभवत् । किन्तु शतं रूप्यकाणि दातव्यानि किल इति पुनः खेदः प्राप्तः तेन । तथापि अनन्यगतिकतया शतं रूप्यकाणि दत्तवान् सः ।

सर्पग्राहकः तानि स्वीकृत्य गुरुनाथं प्रशंसन् ततः निर्गतः ।

ततः विचारणानन्तरं गुरुनाथेन ज्ञातं यत् सः सर्पग्राहकः वेषधारी एव, नान्यः इति । तेन बहुवारं गुरुनाथसमीपम् आगतम् । किन्तु न किमपि लब्धम् । अतः सः स्वेन पालितं सर्पमेव गुरुनाथगृहं प्रति प्रेषितवान् आसीत् । एतत् ज्ञात्वा गुरुनाथः इतोऽपि कुपितः । सः ग्रामाधिकारिणं दृष्ट्वा वेषधारिणा कृतां वञ्चनां सर्वान् उक्त्वा – 'मया दत्तं धनं पुनः मह्यमेव दापयतु' इति उक्तवान् ।

ग्रामाधिकारी वेषधारिणम् आहूय तर्जितवान् । तदा वेषधारी स्वेन कृतं सर्वम् अङ्गीकृत्य उक्तवान् – ''स्वामिन् ! भवान् एव वदतु । गुरुनाथसदृशाः एव अस्मादृशानां कलाकाराणां पोषकाः । यदि ते साहाय्यं न कुर्वन्ति तर्हि अस्माभिः किं करणीयम् ?'' इति ।

तदा ग्रामाधिकारिणा उक्तम् – ''यदि भवान् स्वकलाप्रदर्शनेन धनं सम्पादयेत् तर्हि अस्माकं कापि आपत्तिः नास्ति । किन्तु भवता गुरुनाथविषये वञ्चना कृता । अतः तानि रूप्यकाणि प्रत्यर्पणीयानि भवता'' इति ।

वेषधारी गुरुनाथेन दत्तं धनं तस्मै प्रत्यर्पितवान् ।

तदा ग्रामाधिकारी स्वनिर्णयं घोषितवान् – ''गुरुनाथवर्य ! यस्मिन् वृक्षे फलानि भवन्ति तं वृक्षं प्रति जनाः फलार्थम् आगच्छन्ति एव । तथैव निर्धनाः अपि धनिकान् आश्रयन्ति । भवादृशैः जनैः आगतानां निर्धनानां साहाय्यं करणीयम् । अतः भवान् तस्मै वेषधारिणे पञ्चविंशतिं रूप्यकाणि ददातु'' इति ।

गुरुनाथः तस्य वचनम् अङ्गीकृत्य पञ्चविंशतिं रूप्यकाणि वेषधारिणे दत्तवान् । न तावदेव, अपि तु ततः आरभ्य तस्मिन् महत् परिवर्तनं जातम् । सः स्वस्य कृपणताप्रवृत्तिं परित्यक्तवान् । सामाजिककार्येषु सहयोगः मम कर्तव्यम् इति चिन्तितवान् सः ।



# अस्माकं प्रधानमन्त्री

गतस्य मेमासस्य २२ तमे दिनाङ्के डा॰ मनमोहनसिंहः भारतस्य चर्तुदशः प्रधानमन्त्री जातः ।

यदा पि.वि.नरसिंहरावः प्रधानमन्त्री आसीत् तदा, तन्नाम १९९१ तमवर्षस्य जून्मासतः १९९६तमवर्षस्य मेमासपर्यन्तं, मनमोहन-सिंहवर्यः वित्तसचिवः आसीत् । ततः पूर्वं सः रिसर्व् ब्याङ्क् आफ् इण्डिया इत्यस्य गवर्नर् आसीत्, योजना-आयोगस्य उपप्रधानः अपि आसीत् सः ।



तस्य जन्म १९३२ तम-वर्षस्य सप्टम्बर्मासस्य २६ तमे दिनाङ्के पश्चिमपञ्जाब-राज्यस्य घर्नामके ग्रामे जातं, यश्च ग्रामः इदानीं पाकिस्थानस्य अधीनः अस्ति । १९४१ तमे वर्षे तदीयः परिवारः अमृतसरं प्रति आगच्छत्, शुष्कफल-वाणिज्यम् अकरोत् च । अर्थ-दृष्ट्या मध्यमवर्गीयं कुटुम्बं तत् । एवं हिं श्रूयते यत् शुल्कदानस्य असामर्थ्यात् मनमोहनस्य महाविद्यालयीयम् अध्ययनं वर्ष यावत् स्थागितम् आसीत् इति । सर्वासु कक्ष्यासु प्रथमं स्थानं तस्यैव भवति स्म । तदीयां प्रगतिं दृष्ट्वा पिता गुरुमुखसिंह-कोहिली कदाचित् उक्तवान् आसीत् - ''कदाचित् भवान् एतस्य देशस्य प्रधानमन्त्री भविष्यति निश्चयेन'' इति । मनमोहनसिंहः होशियार-पुरस्थात् पञ्जाबविश्वविद्यालयात् अर्थशास्त्रे स्नातकपदवीं प्राप्य व्याख्यातृरूपेण क्वचित् नियुक्तिम् अङ्गीकृतवान्, यतः विश्वविद्यालयात् प्राप्तम् ऋणं प्रत्यर्पणीयम् आसीत् तेन ।

ततः सः केम्ब्रिज् विश्वविद्यालयात् स्नातकोत्तरपदवीं प्राप्तवान् । अनेकाः प्रशस्तयः अपि तेन प्राप्ताः । ततः आक्स्फर्ड्-विश्व-विद्यालयात् पिएच्.डि.पदवी तेन अधि-गृहीता । परिश्रमशीलः शोधच्छात्रः इति तेन प्रशंसा अपि प्राप्ता तदा ।

आक्स्फर्ड्विश्वविद्यालये केम्ब्रिज्-विश्वविद्यालये वा उद्योगप्राप्तिः यद्यपि शक्या आसीत् तथापि मनमोहन-सिंहः भारतं प्रति आगमनम् एव वरम् अमन्यत । सः पञ्जाब-विश्वविद्यालये प्राध्यापकत्वेन नियुक्तः जातः । देहलीस्थे जवाहरविश्वविद्यालये दिल्ली स्कूल् आफ् इकानमिक्स् इत्यत्र च गौरवप्राध्यापकत्वेन अपि तेन कार्यं कृतम् । १९७२ तमे वर्षे वित्त-सचिवालयस्य मुख्यमार्गदर्शकत्वेन सः शासकीयसेवाम् आरब्धवान् ।

वित्तसचिवपदम् आरूढवान् सः आर्थिक-परिष्कारस्य आनयने प्रयासम् अकोरत् । सः १९९१ तमे वर्षे प्रथमे आयव्यय-पत्रोपस्थापनावसरे अवदत् - ''प्रबलार्थिक-शक्तिरूपेण भारतम् अचिरात् एव प्रकाशितं भविष्यति'' इति । तदीये प्रधानमन्त्रित्वे भारतेन विशिष्टा प्रगतिः साध्यते इति भावयामः वयम् ।

असंख्यानां वाचकानां प्रतिनिधित्वेन चन्दमामा तदीयं शुभोदर्कम् आशास्ते ।

12

शान्तिपुरम् अनधिकृततया स्वायत्तीकृतवान् वीरसिंहः खिन्नः । यतः तस्य सर्वाः योजनाः विफलाः जायमानाः सन्ति । भूस्वामिभ्यः बलात् स्वीकृतान् तण्डुलान् विक्रीय आयुधानि क्रेतव्यानि इति सः इच्छति । आस्थाने सन्देशसहितः बाणः प्राप्यते । यदीयाः एव शब्दाः सन्देशे उद्धृताः आसन् । आस्थने एव स्थितस्य विपक्षीयस्य ग्रहणाय सेना आदिश्यते ।

# आर्यः

राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः

कानिचन वर्षाणि गतानि । जयानन्देन यस्य शिशोः नाम आर्य इति निश्चितं सः इदानीं पञ्चवर्षीयः बालकः जातः अस्ति ।

किम् अरण्यम् एतावत् सुन्दरं भवति ?

भोलः नाम गजः तस्य निमित्तं सर्वाणि कार्याणि करोति । मल्लीनामिका शुकी तु सदा तस्मिन् दृष्टिं स्थापयति ।

हे, मां कुत्र नयति भवान् ?

व्याघ्रशावकौ आर्यस्य आत्मीयौ सुहृदौ ।

ऋषिः वर्धनशीलं बालकं ज्ञानम् उपदिशति ।

प्रार्थना ध्यानं च युगपत् एव प्रवर्तते ।

ओम् ओम् ओम्

प्रकृतिः ईश्वरस्य किञ्चन रूपम् ।


सायं तौ पर्वतमूलं गच्छतः । बालकः यथा न जानीयात् तथा ऋषिः स्वकीयाः काश्चन शक्तीः तस्मै ददाति ।


कस्मिंश्चित् सायङ्काले
गुरुवर्य ! मम माता का ? मम पिता कुत्र वसति ?


भवान् विशिष्टः बालकः अस्ति आर्य !
भवान् एव मम पिता । प्रकृतिः एव मम माता ।


वत्स ! भवतः बुद्धिमत्ता ज्येष्ठानां बुद्धिमत्ताम् अपि अतिशेते ।


भगवतः प्रीतिः सदा भवति तिष्ठतु ।


आचार्य ! अहम् अद्य नितरां सन्तुष्टः अस्मि ।


कश्चन अपरिचितः जनः दूरतः आर्य पश्यन् अस्ति इत्यंशः जयानन्देन परिलक्ष्यते ।
एषः बालकः कः स्यात् ?


मम आश्रमं प्रति भवते स्वागतम् ।


कस्यचित् वस्तुनः जनस्य वा अन्वेषणं किं भवान् करोति ?
आम


भवान् महर्षिः जयानन्दः खलु ? आर्य ! एषोऽहं प्रणमामि ।
भवतः ऊहा युक्ता एव ।


सः बालकः कः इति किम् अहं ज्ञातुम् अर्हामि ?
भवान् स्वपरिचयं वदति चेत् अहं भवतः प्रश्नस्य उत्तरं वदेयम् ।


नूतनः अवगुण्ठनम् अपनयति ।
महाराज ! एषः बालः भवतः एव पुत्रः।
मम पुत्रः !


पञ्चसु वर्षेषु सः, अहो, कियदुन्नतः जातः अस्ति !


आर्यः अपरिचितस्य ऋषेः वा उपस्थितिम् अगणयन् क्रीडायां निमग्नः ।


मम सेनापतिः मां, मम पत्नीं पुत्रं च मारयितुं प्रयासम् अकरोत् । अस्माकं का गतिः जाता इति सः न जानाति । अहं मृतः इति चिन्तितवान् स्यात् सः ।
यदि भवान् सजीवः स्थितः स्यात् तर्हि राज्ञ्याः पुत्र्याः च अन्वेषणाय अत्र आगच्छेत् एव इति अहं जानामि स्म । पुत्रं मदधीनं कृत्वा राज्ञी स्वर्गस्था जाता ।


तदनन्तरं किं प्रवृत्तम् ?
सा स्मारके चिरनिद्रायां निमग्ना । भवतः पुत्रः प्रतिदिनं स्मारकस्य उपरि पुष्पं स्थापयति ।


शान्तिदेवः स्मारकस्य दिशि गच्छति ।


सः शोकाभिभूतः भवति ।
हा देवि ! अहं भवत्याः रक्षा कर्तुं न शक्तः ।


जयानन्दः तस्य समीपं गच्छति, सान्त्वनं करोति च ।


राजा सन्तुलितचित्तः भवति । झटिति...
किम् अहं मम पुत्रेण मेलितुमर्हेयम्
निश्चयेन । यथा भवतः इच्छा तथा । किन्तु राजन् ! सः भवन्तं पितृत्वेन झटिति न अभिजानीयात् । तदर्थं कालः आवश्यकः ।
अवगच्छामि ऋषिवर्य ! अहम्
अनुवर्तते

# जीवहत्यानिवारणम्

वीणा, तस्याः मातापितरौ च वस्तु-सङ्ग्रहालयं द्रष्टुं गतवन्तः । तत्र स्थितम् एकं मातापुत्रयोः चित्रं दृष्ट्वा वीणा सन्तोषेण उक्तवती – ''अहो, सुन्दरं दृश्यम् एतत् !'' इति ।

''चित्रं तु रमणीयम् । किन्तु एतस्य सौन्दर्यस्य पृष्ठतः स्थितं क्रौर्यं किं भवती जानाति ?'' इति अपृच्छत् पिता ।

''चित्रस्य पृष्ठतः किं क्रौर्यं निहितम् अस्ति तात ?'' इति आश्चर्येण अपृच्छत् वीणा ।

''वत्से ! एतत् गजदन्तेन निर्मितं ननु ? एतादृशानां दन्तानां निमित्तं प्रतिवर्षं शतशः गजाः मार्यन्ते । स्वस्य सन्तोषाय मानवः गजकुलमेव नाशयति ।''

''एवम् ! नितराम् आघातकरम् एतत् । किं वयं गजकुलस्य संरक्षणाय किमपि कर्तुं न शक्नुयाम ?'' – वीणा अपृच्छत् ।

''गजदन्तैः निर्मितानां वस्तूनां विक्रयणं सर्वकारेण निषिद्धम् अस्ति । तथापि तत् वाणिज्यं तु कथमपि अनुवर्तते एव । पश्वादीनां विषये मानवेन एतादृशाः अनेकविधाः क्रूरव्यवहाराः क्रियन्ते । चर्मणः निमित्तं शशाः पोष्यन्ते, अन्ते मार्यन्ते च । तेषां चर्मणा प्रावारक-पाञ्चालिका-स्यूतादयः निर्मीयन्ते । एवमेव सर्पाः गृह्यन्ते, वृक्षेषु उत्तोल्यन्ते च । तेषु जीवत्सु एव तेषां चर्म अपनीयते । कोमलचर्मणा स्यूतादयः निर्मातव्याः इति उद्देशेन भवति एषः क्रूरः व्यवहारः'' इति विवृतवान् वीणायाः पिता ।

''एतस्याः क्रूरतायाः अवरोधाय किं कोऽपि उपायः नास्ति ?'' इति विषादेन अपृच्छत् वीणा ।

तदा पिता अवदत् – ''चर्मनिर्मितानां गज-दन्तनिर्मितानां च वस्तूनां क्रयणं स्थगितं चेत् एतस्य निवारणं साधितं भवेत् । यत्र जीवहानिः नास्ति तादृशानि एव वस्तूनि क्रेतव्यानि'' इति ।

''इतःपरम् अहम् एवमेव करिष्यामि । भवान् माम् एतत्सर्वम् उक्तवान् यत् तदर्थं धन्यवादाः'' इति अवदत् वीणा ।

## भवदर्थं विज्ञानम्

### शीघ्रं शुष्यन्ती मषी



'बाल्पेन्'नामिकाः लेखन्यः एषु दिनेषु जनप्रियाः । सर्वत्र उपयुज्यन्ते ताः । यत्र मषी पूरणीया तादृश्यः लेखन्यः विरलाः जाताः ।

'बाल्पेन्' इति एतासां लेखनीनां नाम किमर्थं जातम् इति किं भवन्तः जानन्ति ? लेखन्याः अन्तः पुनःपूरणी भवति खलु । तस्याः अग्रभागे लघु लोहगोलकं भवति । यदा वयं लिखामः तदा एतत् गोलकं भ्रमत् मषीं पत्रं प्रति प्रेषियति ।

गोलकम् अतिक्रम्य मषी प्रवहति यत् तस्य कारणं - सा मषी तैलमयी नवनीतम् इव चिक्कणमयी च भवति । मषी शीघ्रं शुष्यति । 'फौण्टन्'जातीयासु लेखनीषु मद्यसारनिर्मिता मषी उपयुज्यते । अतः तस्याः शुष्कीभवने विलम्बः । जलम् इतोऽपि विलम्बेन शुष्यति । 'बाल्पेन्'तन्त्रज्ञानं प्रायः १८८० तमवर्षस्य अनन्तरं ज्ञातम् । तथापि एतत् तन्त्रज्ञानम् उपयुज्य ऐदम्प्राथम्येन लेखनी तु निर्मिता १९३० तमे वर्षे हङ्गरीदेशे लास्लाजार्ज्-बिरोनामकाभ्याम् ।

## भवतां परिसरः

### कृमिषु अपि सन्ति कृषिकाः

कृषिक्षेत्रे मानवजातिः एका एव समर्था इति किं चिन्तयन्ति भवन्तः ? यदि तथा चिन्त्यते तर्हि तत् अयुक्तम् एव । पिपीलिका-जातिः काचित् तदा एव शिलीन्ध्रकृषिं जानाति स्म, यदा च मानवः तत् कौशलं न ज्ञातवान् आसीत् ।

कोटिशः वर्षेभ्यः पूर्वम् एव, जातिविशेषे जाताः पिपीलिकाः काश्चन वल्मीकेषु शिलीन्ध्राणि वर्धयन्ति स्म । शिलीन्ध्रेषु अनेकाः जातयः सन्ति । वन्यजातीयानि शिलीन्ध्राणि वर्धयन्ति स्म ताः ।

आहारस्य उपरि शिलीन्ध्राणां वर्धनम् आकस्मिकतया पिपीलिकाभिः लक्षितम् । तानि आहारतः अपि रुचिकराणि इति ताभिः ज्ञातम् । ततः ताः शिलीन्ध्राणां वर्धनाय एव पर्णादीनां सङ्ग्रहम् आरब्धवत्यः । एवं शिलीन्ध्रकृषिः ताभिः आरब्धा ।

शिलीन्ध्रवर्धकाः पिपीलकाः शताधिकाः सम्भूय लघुनीडं रचयन्ति । शुष्कान् जीवरहितान् शाकान् ते शिलीन्ध्रवर्धनाय उपयुञ्जते । केचन पिपीलकाः पर्णानि सङ्गृह्य शिलीन्ध्रोद्यानं प्रति आनीय एतस्यां कृषौ सहकुर्वन्ति ।



# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### सेव्यताम् उपहारः

यदा वयं बालाः आस्म तदा प्रायः उत्थाने विलम्बः भवति स्म । तदा त्वरया विद्यालयं प्रति धावामः स्म । तदा प्रायः समयाभावात् उपाहारसेवनं परित्यज्यते स्म खलु ?

उपाहारसेवनस्य परित्यागः न वरम् । रात्रौ दीर्घकालं यावत् विश्रामः भवति । अतः



प्रातः शरीरयन्त्रस्य आरम्भार्थं किञ्चित् शक्तिः अपेक्षिता भवति । सा च शक्तिः प्रातःकालस्य उपाहारस्य सेवनात् एव प्राप्यते ।

उपाहारस्य त्यागात् मस्तिष्कं प्रति 'ग्लुकोस्' अल्पप्रमाणेन गच्छति । तत् ग्लुकोस् एव शक्त्युत्पादकम् । रक्तशर्करांशः घण्टात्रयात् अधिककालं समस्थितौ स्थातुं न अर्हति शरीरे । अतः क्रमेण शक्तिक्षयः भवति तत्र ।

शक्तिक्षयः यदा भवति तदा शरीरे श्रान्तिः दृश्यते । चित्तस्य एकाग्रता अपि क्लेशाय भवति ।

## भारतदेशम् अधिकृत्य..

### देवानां विषये कियत् जानन्ति भवन्तः ?

१. कश्चन देवः ऐश्वर्यस्य अधिपत्वेन ख्यातः । सः कः ?
(अ) इन्द्रः (आ) अग्निः
(इ) कुबेरः





२. कस्मिंश्चित् अवतारे विष्णुः आकारेण अल्पः दृश्यते । सः अवतारः कः ?
(अ) कूर्मः (आ) वामनः
(इ) वराहः

३. कश्चन देवः मृत्युसम्बद्धः अस्ति । सः कः ?
(अ) शिवः (आ) इन्द्रः
(इ) यमः





४. गणेशस्य वाहनं किम् ?
(अ) मूषकः (आ) ऐरावतः
(इ) भल्लूकः

५. का देवी अस्मभ्यं ज्ञानं ददाति ?
(अ) लक्ष्मीः (आ) सरस्वती
(इ) पार्वती



(उत्तराणि ७८ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा



**अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



TATA NARAYANAMURTHY



TATA NARAYANAMURTHY

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।
पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

**'जून्'मासस्य चित्रशीर्षिकाप्रेषिका -**
**कुमारी रीना सिंहः**
सि - ३३/११८ - ३, छित्तुपुर चन्दुआ
**वाराणसी - २२१००२** *(उ.प्र.)*

**पुरस्कृता शीर्षिका**





**प्रतिजानीमो वयम्**
**न भविष्यति पुनर्भारतस्य विभाजनम्**

## भारतदेशम् अधिकृत्य - उत्तराणि

१. कुबेरः
२. वामनः
३. यमः
४. मूषकः
५. सरस्वती

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)



# CHANDAMAMA CHILDREN'S SPECIAL

**(November 2004 issue)**

Inviting young writers and artists (ages 6-15) to send original stories and drawings/paintings

## STORIES

• Maximum 3 entries • Entries can be in any language in which *Chandamama* is printed • Number of words not to exceed 500 • Give a catchy title • Selected entries will appear in all language editions.

## DRAWINGS

• Maximum 3 entries • Minimum size 15 x 10 inches • The theme of drawing / painting should be from Indian mythology - a short synopsis to accompany the entry • If selected on the basis of their entries, the participants should be ready to travel to Chennai to illustrate stories • Travel expenses will be met.

## GENERAL

• Attach passport size photo (colour) • Attach separate sheet with details: name, age (date of birth), class, name of school, home address in full with PIN code, phone number, description of entries • Entries to be certified by parent to be original/unaided work of participant • Superscribe on the envelope : **Children's Special**



**CLOSING DATE : September 15, 2004**

• Chandamama will hold full copyright of the selected entries, to use them in both print and electronic media and in any language.

**Chandamama India Limited, 82 Defence Officers' Colony Ekkatuthangal Chennai - 600097**

